अनामयोक्तेरनुनाथ वाणी नृपालवाक्जाद्द्रुतमाविरास ।
फुल्लात्सरोजान्मकरन्दझर्याः पश्चात्प्रभूतेव सुगन्धलक्ष्मीः ॥९१॥

कस्यास्त्वदीयविरहकातरीकृतमानसाः ।
कस्यानां नयनानन्दः संभविष्यति दर्शनात् ॥ ९२ ॥

को वा देशः पचेलिमभाग्यः श्रीमदीयप्रवालकोपमपदयुगलस्पर्शसुखमनुभविष्यति । कीदृशपुरमासादाङ्गणालंकरणरमणीनां नयनकुवलयेषु श्रीमदीयसंदर्शनकन्दलितानन्दबाष्पनिष्यन्दो मकरन्दशङ्कामङ्कुरयिष्यति । कस्यां वा वंशवल्ल्यां विमुक्तोपमानोऽपि भवान्मुक्ताफलायते । कः पुनः श्रीमता पुत्रवतां मौलिमाणिक्यतामारोपितो भाग्यवतां माहात्म्यवतां कीर्तिमतां च ।

इत्यादिमश्नपदवीं यथायोग्योत्तराक्षरैः ।
लङ्घयामास जङ्घालः स्वामी वचनवर्त्मनि ॥ ९३ ॥

विनयकन्दलितैर्विमलोत्तरैर्नरपतिर्द्विगुणीकृतकौतुकः ।
चिरमयाचत नन्दनसंसदा वरशरासकलाप्रतिपादनम् ॥ ९४ ॥

विज्ञाय तदभिप्रायं प्रज्ञाशाली नराधिपः ।
कौरवस्य वशे चक्रे कुमारानखिलानपि ॥ ९५ ॥

तदनु कोदण्डभिण्डिपालपरिघमुद्गरपरश्वधादिपरिष्कृताम्, क्षौणीमिव शरभिभिरलंकृताम्, विदशनगरीमिव सर्वतोऽमरसेविताम्, जलधिवेलामिव मधुरनरवारिविराजिताम्, वनसीमामिव पत्रिकुलपरिवृताम्, आयुधकान्तिसन्तानद्विगुणीकृतारुण्यरक्तमृत्तिकापरीतभूमिभागतया मूर्तमिव चापविद्याविशारदमतापमादधानाम्, मध्ये निशातवज्रमयस्तम्भशोभितत्वा प्रहरणगणैर्विजित्य बन्दीकृतमिव कुलिशायुधकुलिशं बिभ्राणामायुधशालां शुभे मुहूर्ते प्रविश्य जीवंधरः क्षितिपतितनयानुद्दिश्य कार्मुककौशलं विवरीतुमारेभे ।

नृपात्मजानां निचयस्ततो नु कोदण्डविद्याकुशलत्वमाप ।
तत्कीर्तिकल्लोलपरंपरा च जगत्त्रयं मोदरसं महीशः ॥ ९६ ॥
विद्यावैदग्ध्यपीठीमधिवसति निजे नन्दनानां समाजे
दृष्टिं हेमासनस्थे कुरुकुलतपने प्रीतिमन्तश्च चिन्ताम् ।
किं कुर्यामस्य वीरव्रजमहितकलादानमान्योपकार-
श्लाघ्यस्येति क्षितीशश्चिरतरमतनोद्धीमतामग्रगण्यः ॥ ९७ ॥

तदनु कन्याविश्राणनं करणीयं गणयता नरपालमणिना प्रार्थितं परिणयं वरुणालयगभीरः करुणाकरो जीवंधरः क्रमेणाङ्गीचकार ।

नरपतिपरिदत्तां यौवनारम्भमत्तां
सपदि कनकमालां वक्षसि श्लिष्टमालाम् ।
सकलगुणवरिष्ठां सन्मुहूर्ते वरिष्ठे
कुरुपतिरुपयेमे मण्डपे तत्र हैमे ॥ ९८ ॥

इति श्रीमहाकविहरिचन्द्रविरचिते श्रीमति चम्पुजीवंधरे
कनकमालालम्भो नाम सप्तमो लम्बः ।

---

## अष्टमो लम्बः ।

नीलालकां तामुपयम्य रामां कुरूद्वहः सौख्यपयोधिमग्नः ।
स्यालेषु वात्सल्यवशेन तत्र चिरं न्यवात्सीद्गमयन्मृगाक्षीम् ॥ १ ॥

अथ कदाचिन्मन्दस्मितमकरन्दोद्गारिवदनारविन्दा विस्मयवशाप्रमुषितनिमेषनयननीलोत्पलतया मालकाननाच्छोणाधरपल्लवसौरभ्यममारष्टो नामाचम्पकदर्शनेन तत्रैव निश्चलतामुपगतो भृङ्गाविति भ्रमावनां संपादयन्तीम्, मरकतवलयप्रभानहलीकृतरोमराजिलतां

न्तिम्, वल्गत्कुचजितमरालगमनकेलीपरवशतया मन्दानिलान्दोलित-गुलुच्छयुगलीं अङ्कमकनकलतां तुलयन्तीम्, संमुखासीनमप्या-रमानं सकलमनुजनयनसरोजकुड्मलीकरणचणेन तेजःप्रसरणेन परीतं द्रष्टुमक्षमतया नलिनान्तिकोल्लासितपल्लवतल्लजभ्रमकारिणा नयनोपरि-भागचारुणा पाणिना मुखं व्यवधाय पश्यन्तीम्, भ्रान्तभावस-न्तीं जीवंधरः कांचिदापत्तासीममासीत् ।

किं वक्तुकामासि कुरङ्गनेत्रि किमागता कोमलवल्लगात्रि ।
स्मितावदाता तव वक्त्रलक्ष्मीः संसूचयत्यादरतो विवक्षाम् ॥ २ ॥

इति दृष्टा चकोराक्षी मधुरां गिरमाददे ।
अलिननी भृङ्गमुखरा मकरन्दझरीमिव ॥ ३ ॥

अत्र चायुधगृहेऽपि चैकदा त्वां निरीक्ष्य परिमण्डितं श्रिया ।
चित्रिते रमति चित्तमन्दिरे संभ्रमो मम विवक्षया सह ॥ ४ ॥

इत्यादिवचनरचनां चन्द्रकलामिव कान्ताजनकटाक्षलीलामिवेक्षु-चापकोदण्डयष्टिमिव च वक्त्रमधुरामाकर्ण्य विस्मितान्तरङ्गः कुरु-शशाङ्कः, किमिदमश्रुतदृष्टपूर्वमिति चिन्तयन् क्रमेण नन्दाढ्यः समागतः किमित्यूहाञ्चक्रे ।

वपुषा प्रथमं विवेश शालां मनसा चैव ततः कुरूद्वहः ।
कुतुकप्रसरे हि निर्निरोधे क्रमभावो न च तत्र लक्ष्यते ॥ ५ ॥

अवलोक्याग्रजन्मानं नन्दाढ्यो मन्दविस्मयः ।
प्रमोदभारगुरुणा वपुषा प्रणनाम सः ॥ ६ ॥

विकसत्कुसुमाञ्चितेन मूर्ध्ना क्षितिभागं स न यावदस्पृशत् ।
रभसेन कुरूद्वहेन तावज्जगृहे कोमलबाहुयष्टिना ॥ ७ ॥

कुरुवीरवक्षसि कवाटविस्तृते न ममौ वपुः प्रमदभारमांसलम् ।
अनुजस्य तत्तदपि बाहुवल्लरीयुगलेन दैर्घ्यगुरुणाभिपस्वजे ॥ ८ ॥

विनयेन वामनमयं सहोदरं शिरसि स्म जिघ्रति कुरूत्तमो मुहुः ।
अनुजाङ्गमङ्गमसुखस्य सूचकैर्घनरोमकूपनिचयैर्निरन्तरः ॥ ९॥
आनन्दबाष्पैरभिषिक्तगात्रं सहोदरं हर्षविकासिनेत्रम् ।
आपृच्छ्य सौख्यं कुरुवंशकेतुः कथं समागा इति सोऽन्वयुङ्क्त ॥१०॥

इति भ्रातुरनुयोगशैलीं श्रुत्वा परिगृह्य मनसा ध्यातप्राक्तन वृत्तान्तः, पुनः प्रत्यावृत्ताग्रजविप्रयोगदुःखतान्त इव सरभसमुद्गत-निश्वसितमन्दीपितस्मृतिपथंगतवियोगवह्निसंगादिव कोष्णान् तत्पूर्व-तनानानन्दाश्रुबिन्दूनिव दुःखबाष्पासारतया परिणतान् स्फुटित-मुक्तासरमणीनिव परितः किरन्, अमन्दतराक्रन्दनवेगं कथमपि नियम्य नन्दाढ्यः स्वहृदयव्याकृन्दः सगद्गदमुत्तरमादातुमुपचक्रमे ।

भवति राजपुरात्सति निर्गते सपदि पापविपाकवशेन नः ।
महति बन्धुगणस्य तदोत्थितो मनसि दुःसहशोकहुताशनः ॥ ११ ॥

वाचामगोचरे शोकपारावारे निपातिताम् ।
निरीक्ष्य बन्धुतां दीनां मर्तुं व्यवसिता वयम् ॥ १२ ॥

तदानीं दुरन्तदुःखनितान्ततान्तस्वान्तौ सन्ततमुद्यान्तबाष्पधारया प्रथमामीतियाशमिताबन्तौ मातापितरावेवं प्रलापमतिनुतः ।

अहह बत ततन कामि दैवं दुरन्तं
तनयविपदि सत्यामप्यहो दुःसहायाम् ।
पशुपतिनिनयानां जीवितं निश्चलं नो
कथमियमतिदीर्घा दुर्दशा हा निन्हृत्या ॥ १३ ॥

प्रजावती कथंवृत्तेति स्थाने बोधः समजायत ।

एवं भवद्दर्शनभाविसौख्यसंप्रापकादृष्टवशेन सद्यः ।
प्रजावतीमन्दिरमेत्य सोऽहं विषाददीनाक्षरमेवमूचे ॥ १४ ॥
प्रजावति विजानती सकलपद्धतिं त्वं कथं
निर्मापि नवमालिकां कचकुले हरिद्रां तनौ ।
न युक्तमिदमास्थितं विगतभर्तृवामभ्रुवां
वृथा खलु सुखासिका सकललोकगर्हास्पदम् ॥१५॥
इत्युक्ता सा विशालाक्षी मन्दहासाननाम्बुजा ।
पिकीव मधुरालापा मधुरां वाचमाददे ॥ १६ ॥
अङ्ग तावकसहोदरवर्यस्तुङ्गपुण्यविभवेन मण्डितः ।
क्षेममाश्रयति सौख्यपरीतः पापतो वयमिहाततदुःखाः ॥१७॥
देशे देशे सुन्दरीश्चन्द्रवक्त्राः पाणौकृत्य प्राप्तहर्षप्रकर्षः ।
हेमाभाख्ये पत्तने सोऽयमद्य प्रीतां राज्ञो नन्दिनीं संदधाति ॥१८॥

'एवमगण्यपुण्यवशेन विपदमपि संपदात्मना परिणतामनुभवन्त सुखमावसन्तं निरन्तरनिपतद्राजतनूजमकुटराजिनीराजितचरणनीरेजं भवदीयाग्रजं द्रष्टुमिच्छसि चेदस्येतेति प्रतिपाद्य, विद्यावैशद्येन स्मरतरङ्गिणीनाम्नि शयनतले शाययित्वा, सपदि मामत्रमयति प्राहिणोत् ।

इति करुणमयैर्गिरां प्रवाहैरनुजमुखादुदितैः कुरूद्वहोऽसौ ।
भृशमतनुत तापभारमन्तर्वदनतले न विकारलेशलेशम् ॥ १९ ॥
अत्रानयदसौ पत्रं सगर्भेण समर्पितम् ।
गन्धर्वदत्तालिखितं विचित्राक्षरलक्षितम् ॥ २० ॥

आर्यपुत्र गुणमाला विज्ञापयत्येवम्—

कंदर्पो विषमस्तनोति तनुतां तन्वां ज्वरे गौरवं
मृत्युश्चापि दयाकथाविरहितो मां नैव संभाषते ।

आर्ये त्वं च नवाङ्गनासुलभवशाद्विस्मृत्य मां मोदसे
जातीपल्लवकोमला कथमियं जीवेत्तव प्रेयसी ॥२१॥
स्थानेऽभिन्नकुरितो ममोरसि कुचौ वृद्धिं गतौ तावके
वाचस्तावकवाग्रसे परिचिता मौग्ध्येन सत्याजिता ।
बाहू मातृगलस्थलादपसृतौ त्वत्कण्ठदेशेऽर्पिता
आर्य प्रेमपयोनिधे स्थितमिदं विज्ञापितं किं पुनः ॥२२॥

इति प्रियाया अन्यापदेशलिखनपरिपाटीं मनसा चिन्तयन्प्रियाशोकविदीर्णशरीरः कुरुकुमारो, मुहुर्मुहुर्जननीजनवयस्यसुतोजनान्, कुशलानुयोगमत्यादरेण विस्तार्य, सगर्भसगमतुङ्गतमतोषेण मुहूर्तमासामास ।

समया कुरुकुञ्जरं निविष्टं कनकाद्रिं निकषेव शीतरश्मिम् ।
अनुजं मनुजाधिपात्मजासौ कुशलप्रश्नपुरःसरं परीयुः ॥२३॥

एवं सोदरसमागमसन्तुष्टस्वान्ते कुरुकुमुदिनीकान्ते मुपविष्टमानेषु राजतनूजेषु, कदाचित्सरभसधावनजनितोर्ध्वनिश्वासनिरन्तरानि सरणदत्तावसाहाय्यकभरकम्पिततनुदण्डा प्रचण्डवातचलितबालपादपमरूपा, अन्तरमेयतया बहिः प्रसृतैरिव भयानकरसपूरैः स्वेदसलिलैर्दैन्यसाम्राज्येऽभिषिक्ता इव गोपाः, राजमन्दिराजिरे आर्ततरमेव चुक्रुशुः ।

हे राजन्नरगोटक्रमसत्सुरासुरनोपदनो
राज्या रामभूभ्रया वचन्निराकाशायवारो परे ।
राजस्तावकगोधनं निखिलमप्याहृत्य नीतं स्वना
विनोदभिताशङ्कितोपट्टुरवैर्गोपोऽपि सन्तोभितः ॥२४॥
उद्यत्प्रतापपरभेन सहस्रराशे
गौर्मण्डलं तव च भूमिपतेर्निरुद्धय ।

मत्यार्यसैनिककुलं प्रचुराट्टहासै-
र्लोकांस्त्रयति शिथिलयत्यरिधीरतां च ॥ २५ ॥

इत्याक्रोशं समाकर्ण्य भूपतिर्बलमादिशत् ।
स्वामी श्वशुररुद्धोऽपि प्रस्थितः परवीरहा ॥ २६ ॥

तदनु रयविनिर्जितविहगपतितुरगगणविविधगतिविदलितवसुधातल-निर्गलद्धूलिकापालिकाविशेषशोषितनाकमहीसिन्धून्सुदूरमूर्ध्वप्रसारित-शुण्डादण्डसत्वरपूत्कारशीकरपरंपराभिर्गण्डतलयुगलविगलद्दानधारा भिश्च संपूर्य सार्थकनामधेयधरैः सिन्धुरैर्गन्धरगमनपयोनिधिफेनकूटायमानपटपरिष्कृतपताकादण्डमण्डितरथकड्यासंघटितैः धृतमेचक-कञ्चुकसंपत्तिभिः पत्तिभिः संकुलं बलं पुरोधाय प्रतिष्ठमानाः, कुरुविन्दकुण्डलरुचिवीचीकवचितभुजविराजिततया बहिरपि साक्षात्प्रमूर्तमिव प्रतापं बिभ्राणाः, एते ह्यनतान्मण्डलीकान्निराकरिष्यन्तीति भयेन सेवार्थमागताभ्यामिव शीतोष्णरश्मिभ्यामङ्गदाभ्यां संगताः, तुङ्गतममुक्ताहारमनोरमविशालवक्षःस्थलतया नक्षत्रमालालंकृतशारदाम्बरं तुलयन्तः, ते जीवंधरनन्दाढ्यपुरःसरसुमित्रप्रमुखराजपुत्राः क्रमेण रणाङ्गणमवतेरुः ।

भेरीरवः सकलदिक्पतिसौधशृङ्ग-
वातायनाररकुलानि विभिद्य तूर्णम् ।
अन्तः प्रविश्य बहुदरकदम्बखेद-
विश्रान्तिमाप रणकेलिमुखप्रभूतः ॥ २७ ॥

तदानीमुभयेषां सैनिकानां परस्परमेवं वीरवादा बभूवुः ।

अस्माकं त्रिजगत्प्रसिद्धयशसामेषा कृपाणीलता
शत्रुस्त्रीनयनान्तकज्जलजलैः श्यामा निपीतैः पुरा ।

समन्त्याद्द्वसौऽयं युष्मदसृजा पानेन शोणीकृता
वीरश्रीरिसिनपाण्डरा चरिततश्चित्रा भविष्यत्यहो ॥२८॥
गोवृन्दसकान्भवतोऽस्मदीयमुना वयस्या इव सयुगेन ।
नेयन्ति गामद्य निमेषमात्रान्न तिष्ठतास्मत्पुरतो हठेन ॥ २९ ॥
पशून्वा प्राणान्वा जहत झटिति क्षीबपुरुषा
स्वमूर्ध्नश्चापान्वा नमयत नरेन्द्रस्य पुरत ।
मुखे वा हस्ते वा कुरुत शरवृन्दं नरपति
कृतान्तागारं वा शरणयत तूर्णं मतिमया ॥ ३० ॥
अन्येऽप्येवमाहु ।
किं वाचाविसरेण मुग्धपुरुषा किं वा वृथाडम्बरै
रात्मश्लाघनयानया किमु भटाः सैषा हि नीचोचिता ।
सक्रीडद्रथचक्रकूटघरणो भिन्नेभमुक्ताफलै-
श्चापाभ्राच्छरवर्षतो विजयिनं शुभ्र यशोऽङ्कुरति॥ ३१ ॥
इत्यादि वदतामेषामधरोष्ठपुटाविव ।
सैनिकाना समूहो द्वौ सगतौ समरोद्धतौ ॥ ३२ ॥

गभीरहयहेषितैर्मदगजावलीबृंहितै-
र्नगत्रितयमन्वभूत्परमतोकशब्दात्मताम् ॥ ३३ ॥
शब्दैकार्णवमग्नमेतमखिलं लोकं समीक्ष्य क्षणा-
द्देवा व्योम्नि समिद्धिलोकनकलाबद्धादरा मेदुराः ।
युद्धारम्भनिरस्ततन्द्रकुरुराड्बाणासनादुद्गता-
न्नाराचान्निबिडमथाभ्रमसि ते सान्ध्याम्बुदान्मेनिरे ॥ ३४ ॥
पद्मास्यमुख्यकरकोमलरक्तकान्ति-
कल्लोलपल्लवितकार्मुकवल्लरीभ्यः ।
नामाङ्किता प्रचलिता च शिलीमुखालि-
र्जीवंधरस्य पदपद्मसमीपमाप ॥ ३५ ॥
द्विरेफः शरवारोऽयं तस्य पादाम्बुजान्तिके ।
भ्रमंश्चकार तद्युक्तं मित्रसांनिध्यसूचनम् ॥ ३६ ॥

तदनु नामाङ्किततदीयबाणगणवीक्षणेन समुन्नतध्वजचिह्नसंदर्शनेन च, एते वयस्या इति निश्चित्य, नरपतिना साकं तदभ्याशमागतः समदविकासितरोमकूपकोरकिततनुलतः कुरुपतिः सबहुमानं तानेकैकशः संभाव्य, निजानुज्ञया रथारूढैः सहचरनिकरैः पुरस्कृतः, पार्श्वगतस्यन्दनकन्दलितस्थितिना महीपतिना संभाष्यमाणः, सिन्धुरगन्धर्वशताङ्गपदगशबलं बलं पुरतो विधाय पुरतोरणमतीत्य चलितः, चिरतरविलोकने कुतूहलसंमिलितपौरजननिरन्तरे रथ्यान्तरे स्तम्बेरमकदम्बकं कादम्बिनीति मत्वा समागताभिरिव सौदामिनीभिः कनकवेत्रलताभिर्वितीर्णावकाशे विगाहमानः, पटुपटहकाहलीडिण्डिमझर्झरझल्लरीमुरजशङ्खमुखवाद्यरवविहितोपहूतिभिः काभिश्चित्सामिकृतमण्डनकलाभिः करकमलसंरुद्धनीविबन्धनकनकचेलाभिश्चलाभिः काभिश्चित्सरभसकाञ्चीपददत्तमुक्ताहारवल्लरीभिः कङ्कण-

पदसमर्पिततुलाकोटिभिर्वधूटीभिरत्युन्नतहर्म्याङ्गणवातायनन्नजदृष्टिभिः निर्निमेषं विलोक्यमानः क्रमेण राजभवनमाससाद ।

कुशलानुयोगमथ कौरवः सखी-
न्बहुधा विधाय मुदितान्तरः परम् ।
समशेत सोऽयमयथापुरोदिता-
दुपचारकौशलवशाद्विशेषतः ॥ ३७ ॥

कदाचिदेकान्ते भृशमपूर्वसंमानसमाहितसंशयडोलायमानमनस्सरोजेन कुरुराजेन चोदिततन्निदानाना सहचराणां तिलकायमानः पद्मवदनः प्रत्युत्तरशैलीमेवमुपादत्त ।

स्वामिंस्त्वदीयविरहानलदग्धदेहाः
श्रीमद्भविष्यदवलोकनपुण्यपाकैः ।
आश्वासिताश्च दयया, धृतदत्तहस्ता
देव्या बभूविम वयं हृयपाणिवेशाः ॥ ३८ ॥

तदनु निखिलमाश्रीयं पुरोधाय पुरान्निर्याय पर्यायेणा तिलङ्घितबहुदूराध्वानः पत्रिकुलनिष्वाननिरुद्धदिशावकाशामरण्यानीं प्रविश्याभ्रंलिहतरुषण्डमण्डिततद्दण्डकारण्यभागपरिकल्पितपटसदननिकटतटेषु घोटपटलं विधाय विश्रान्तिसुखमनुभवामः स्म । तत्र च ।

सौधावलीमतिशयालुभिरुन्नतैस्तै-
शुभ्रैः पटायतगृहैः कलितं निवासम् ।
नूनं भवद्विरहकातरतत्पुरश्री-
रस्माभिरागतवतीति वयं स्म विद्मः ॥ ३९ ॥

तदन्वसद्भुतसंनिवेशं दण्डकारण्यप्रदेशमवलोकितुकामा वयम्, तत्र तत्र विहृत्य, क्वचन विजृम्भितकुम्भीन्द्रकुम्भस्थलमुक्तमुक्ताकुलसिकतिल वनविहरणश्रान्तिनिमज्जत्पुलिन्दसुन्दरीवदनाम्भोजपरिष्कृत

गभीरमहाह्रदम्, कुत्रचित्कदलीसुखकरकम्पितमहीरुहशाखानिपतितपर्णौघसमाघातकुपितसुप्तसमुत्थितशार्दूलधाव्यमानशबरजनसरभसारूढाभ्रंलिहानोकहचयम्, क्वचित्तरुमूलसुखसुप्तानि तमालस्तोमनिभानि भल्लूककुलानि, क्वचित्तपनकिरणसंतप्तवशां पद्माकरसमीपमानीय निजकरनिर्मूलितबालमृणालवलयं तदङ्के निक्षिप्य पयोजरजःसुगन्धिशीतलजलशीकरनिकरांस्तन्मुखे संसिच्य शुण्डादण्डविधृतविशालपद्मपत्रमातपत्रीकुर्वन्तं वशावल्लभम्, कुत्रचित्सावज्ञं लोचनयुगलं क्षणमुन्मील्य पुनः सुषुप्सुं पञ्चवदनसञ्चयम्, सविस्मयमवलोकमानाः, क्वचन तापसजनसंकुले प्रदेशे प्रविशमानाः, क्रमेण किंचित्तरुमूलमावसन्तीं पुण्यमातरं पश्यामः स्म ।

यस्या मूर्तिर्मलिनवसनावेष्टिता क्षामभूता
चन्द्रस्यैका कृशतमकला ध्वान्तरुद्धेव भाति ।
वक्त्रं शुष्यत्सरसिजनिभं शोकदीना च वाणी
चिन्तादीर्घं श्वसितमनिशं मूर्ध्नि बद्धा जटा च ॥४०॥

तया मात्रा दृष्टमात्रेण कुतस्त्या इति पृष्टा एवमुत्तरं वक्तुमुपक्रम्य,

"कश्चिज्जीवककविख्यातो विपश्चिद्वृन्दशेखरः ।
अभाद्राजपुरे सोऽयमस्माकं जीवनौषधम् ॥ ४१ ॥

अहं खलु राजश्रेष्ठिनः सुभद्रायां जातः पद्मास्यः, अयं सत्यंधरमहाराजसचिवात्सागरदत्तायां जातः श्रीदत्तः, अयं पुनरचलात्तिलोत्तमायां जातो बुद्धिषेणः, एष किल विजयदत्तात्स्थ्रीभार्यां जातो देवदत्तः, इमौ पुनर्जीवन्धरानुजस्य नन्दाढ्यस्यानुजौ नपुलविपुलौ, इत्यादिक्रमेण सर्वेषां नामधेयान्यभिधाय,

तदुत्पत्तिदिने जाता वयं सर्वे महात्मना ।

तेन सार्धं विशांपत्या पोषिताश्च निजालये ॥ ४२ ॥

तदनु सकलविद्याः शीलयन्व्याधयूथं

पशुगणविनिवृत्त्यै चापपाणिर्व्यजेष्ट ।

तदनु खचरकन्यां प्राप्य गन्धर्वदत्तां

परिषदुवरवीणाविद्यया कीर्तिमाप ॥ ४३ ॥

ततश्च वासन्तिकेषु वासरेषु वनविहारान्निवर्तमानेषु पौरेषु, दुरन्तमददुरासदस्य काष्ठाङ्गारपट्टदन्तावलस्य मदभङ्गं विधाय गुणमालां परिपालयन्नचिरेणैव तां परिणिन्ये ।

तमेनं कोपवशतः काष्ठाङ्गारः खलाग्रणीः ।

हन्तुं,

इत्यर्धोक्ते, तत्क्षणं हा दावपावकदग्धायां वनवल्ल्यां कुठारमर्पयन्ति भवन्तः, इति दम्भोलिनिहता भुजगीव मूर्छोन्मीलितचेतना भुवि पेतुषी सा माता क्रमेण कथंचिल्लब्धसंज्ञा,

व्यवसितः सोऽयं निजसूनुव रक्षितः ॥ ४४ ॥

इति निरवशेषमुक्तापि, शोकरणरणिकाक्रान्तचित्ता प्रलापमेवमातेने ।

हा हा हा बत हा हतास्मि किमिदं दुःश्राव्यमत्याहितं

हा पुत्र क गतोऽसि हा हतविधे क्रूरोऽसि मत्पुत्रके ।

हा नाथ त्वमुदारपुण्यचरितो यस्मादिमां दुर्दशा-

मज्ञात्वा सुरलोकसौख्यलहरीं विन्दश्चिरं मोदसे ॥ ४५ ॥

हा पुत्र, हा कुरुवंशमित्र, सुलक्षणगात्र, हा पयोजविशालनेत्र, एतावन्तं कालं तव मुखचन्द्रदर्शनमपि दुर्लभमभून्मम मन्दभाग्यायाः । अपि च ।

पत्युर्वियोगमधिकं दववह्निकल्पं

धासं च काननतले स्वपुरं विसृज्य ।

यस्योदयादनुभवाम्यथ जीवितं च
सोऽयं यशोदशकपः कथमद्य वर्ते ॥ ४६ ॥

सत्यंधरस्तव पिता खलशेखरेण
व्यापादितो युधि कृतघ्नवरेण येन ।
तेनैव पुत्र गमितस्त्रिदिवं यदि त्वं
हा हन्त सैष कुरुवंशलताकुठारः ॥ ४७ ॥

पत्युर्वियोगो विपिने निवासो राज्यं च नष्टं तनयस्य शोकः ।
तदद्य दौर्भाग्यहुताशनो मे विनिर्दहेदेव करालशोचिम् ॥ ४८ ॥

स्वप्नो निष्फलतां गतस्त्वयि सुत व्यर्थं वपुर्लक्षणं
सत्यार्थं न बभूव पुण्यवपुषस्तद्देवताया वचः ।
हा भर्तृव्यसनाम्बुधिर्हि सुतरो नैव त्वया पुत्रक
त्वं पन्थानमवेहि मामपि भवल्लोकं प्रति प्रस्थिताम् ॥ ४९ ॥

इत्यादिप्रलापवशेन शोकलहरीं देवीदन्तं चाम्भोदावलिमिव दम्भोलिमभूतं च मुञ्चन्तीं पुण्यमातरं बहुधा समाश्वास्य, तन्मुखादुत्पन्नां देवोन्नतिं नभसो निपतितां रत्नवृष्टिमिव बहुमन्यमाना वयं, पुनः पुनस्तामाश्वास्यापृच्छ्य च श्रीमत्संनिधिमुपागताः, इति" ।

जीवन्मृतां तां जननीं विदित्वा जीवंधरोऽखिद्यत रक्तचित्तः ।
मातुर्गुरुस्नेहवशेन सोऽयं द्रष्टुं क्षणात्तामिह तत्वरे च ॥ ५० ॥

तदनु कुरुकुमुदिनीकान्तस्तत्क्षणमेव सकलबन्धून्विशेषतो मायामापृच्छ्यानुनीय च, अनुगमनकलितकुतुकनृपतनयपत्तिचयं क्रमेण विसृज्य, सहचरमण्डलमण्डितो दण्डकारण्यमाजगाम ।

क्षामक्षामतनुं विवर्णवदनां निःश्वासधूमोत्करै-
श्छिन्नादन्धुरितान्तरामविरलैर्नाष्पैर्मिलल्लोचनाम् ।

ताम्बूलादिविहीनविस्तृतमलप्रोतद्विजालिं जटा-
वल्लीवेष्टितमस्तकां कुरुपतिर्देवीं लुलोके धुरि ॥ ९१ ॥

सा पुत्रमालोक्य पयःप्रवाहिघनस्तनी बाष्पनिरुद्धनेत्रा ।
शुशोच तं चेतसि रुक्मणीव प्रसूनबाणं चिरकालदृष्टम् ॥ ९२ ॥

पदाम्बुजाते प्रणतं कुमारमाशीर्भिराकीर्य सदा भुजाभ्याम् ।
आश्लिष्टवत्याः प्रबभूव तस्या आदेशवच्छोकपदे प्रमोदः ॥९३॥

तावद्यक्षाध्यक्षोऽपि, तयोः समक्षमागत्य, स्नानसुगन्धिलेपनप्रसूनमालिकामणिभूषणदुकूलवसनादिभिः संपूज्य, प्राज्यतमस्नेहेन कुमारप्रमुखान्देवीं च तैस्तैर्मधुरालापैः समाश्वास्य, भासमानेन विमानेन क्रमेण निजास्पदमाससाद ।

अगण्यपुण्यं तनयं वरेण्यमुवाच मातानघशीलपूता ।
पितुः पदं ते किमु वत्सरान्ते भवेन्निपातेन रिपोः कृतेन ॥९४॥

प्रसूगिरमिमां श्रुत्वा प्रसृतप्रथुकौतुकः ।
प्रत्युत्तरमादत्त भावं तस्या विदन्नसौ ॥ ९५ ॥

कुम्भीन्द्रगल्लविगलन्मदवारिधारा-
सिक्ताङ्गणानि चलतुङ्गसमावृतानि ।
क्रन्दद्रथाङ्ककलितानि शराश्रितानि
सेनावनानि मम बाणदवा दहन्ति ॥ ९६ ॥

मदीयकरकुण्डलीकृतशरासनान्मुक्ता
पृषत्कभुजगावली रिपुमहीशवामभ्रुवाम् ।
दृगसितपयोझरीं सुरभिलां निपीय क्षणा-
द्ददाति हृदयान्तरे पृथुलशोकहालाहलम् ॥ ९७ ॥

अथवा ।

रणेऽन्यतमरूपिणे रिपूणां पक्षाण्कोटीकरणप्रवीणे ।

संपन्निशीथे सति मे कृपाणी शत्रुश्रियं नेतुमुदारदूती ॥ ५८ ॥

गुणाकरे रणाजिरे मयि स्वनच्छरासने
पलायितो बलाधिपो निराकृतो धरापतिः ।
स गूर्जरोऽपि जर्जरो भयाकरश्च खेचरो
धृतव्रणश्च कोङ्कणः क्षणे क्षणे भविष्यति ॥ ५९ ॥

इत्यादितनयवचनेन हस्तस्थमिव राज्यं मन्यमानाया जनन्या रक्षणाय कंचन परिवारं तद्योग्यवस्तुसंचयं च तत्संनिधाववस्थाप्य, कंचन कालं वीतशोकया भवत्यात्र स्थीयताम्, कतिपयैरेव दिवसैस्त्वामानेतुं नन्दाढ्यं प्रेष्यामि, इति प्रसवित्रीमाश्वास्यापृच्छ्य च, वयस्यमण्डलैः सह प्रस्थाय राजपुरोपवनमाजगाम ।

मित्राणि तत्र विनिवेश्य स वैश्यवेष-
मादाय राजनगरीं प्रविवेश धीरः ।
रथ्यासु तत्र विचरन्नवरत्नराशि-
संपूरितां प्रविततां विपणिं जगाहे ॥ ६० ॥

तत्र हर्म्याङ्गणे सखीभिः सह कन्दुकविहारमनुभवन्त्याः कस्याश्चिल्लोलाक्ष्या हेलावशेन भुवि पातितं कन्दुकमालक्ष्याश्चर्यविलक्षकुरुहर्यक्षः प्रासादाग्रावलम्बिनीं नितम्बिनीमुन्नमितवदनो विलोकयामास ।

तां कोमलाङ्गीं कुतुकेन पश्यन्कुरङ्गनेत्रीं कुरुवंशकेतुः ।
उन्मीलदाभां नवयौवनेन पुन्नागसङ्काशकुचाममुह्यत् ॥ ६१ ॥

एवं तस्याः सौन्दर्यलहरीनिमग्नमानसः कुरुवतंसः कन्दुकमालोक्यैवमुवाच ।

भाले क्रीडति नीलकुन्तलचये गण्डस्थले कुण्डले
वेण्यां पृष्ठतले स्तनद्वयमुखे हारे चकोरीदृशः ।

मूर्तां मनस्इतिमिव स्फुटदिव्यरूपां
छायामिवाम्बुजशरस्य चकोरनेत्रीम् ।
उन्मीलदुज्ज्वलघनस्तनशोभिताङ्गीं
रागादियामनुबभूव कुरुप्रवीरः ॥ ९८ ॥

इति महाकविहरिचन्द्रविरचिते श्रीमति चम्पुजीवंधरे
विमलालम्भो नामाष्टमो लम्भः ॥

---

## नवमो लम्भः ।

ततो लताङ्गीमनुनीय रामां हित्वा स मित्रैः समगच्छतायम् ।
शशीव पाकारिदिशावधूटीं नक्षत्रवृन्दैः कमनीयरूपः ॥ १ ॥
वरचिह्नमेनमवलोक्य बान्धवा मणिभूषणाञ्चिततनुं कुरूद्वहम् ।
बहुमेनिरे मधुमिवाङ्कुरस्फुरत्कुदचूतपल्लवकुलं वनप्रियाः ॥ २ ॥
तत्र कोऽपि सहसाब्रवीदिदं बुद्धिषेणविदितो विदूषकः ।
सप्रहासमतिविस्तृतेक्षणं ... कुरूद्वहम् ॥ ३ ॥

नूपुररवमुखरितदिगन्तराः सत्वरगमनवशेन चलत्कुचकलशसंताड्य- मानव्यालोलमुक्ताहाररुचिवीचिप्रकाशितसदनभागाः परिचलितकन- निचयरुचिरसुममालिकानिषण्णोड्डीनमिलिन्दमञ्जुझङ्कारवाचालाः कूज- त्काञ्चीकलापाः सुरमञ्जरीसमक्षमेत्य सगद्गदमेवमवादिषुः ।

वृद्धद्विजः कश्चिदपूर्वदृष्टो रुद्धोऽपि गेहान्तरमाविवेश । इतीयमालीवचनं निशम्य तं द्रष्टुमागात्कुतुकेन तुन्ना ॥ १० ॥

द्विजातिवृद्धं पुरतो निषण्णं बुभुक्षितं वीक्ष्य सरोरुहाक्षी । समादिदेशाथ सखीसमाजं तद्भोजनाय मधुरादरेण ॥ ११ ॥

तदनु यथाविधि सहर्ष भुक्तवन्तं सखीभिरन्तिकमानीतं तमेन- मग्रासनमधिरोप्य, 'कुतो भवानागतः पुनः कुत्र गमिष्यसि' इति, सा सुरमञ्जरी मञ्जुलवचनचातुरीविजितपिकस्वरमाधुरी सकौतुकं पप्रच्छ ।

'इति गिरं समवेत्य कथंचन स्थविर एवमुवाच शनैः शनैः । सुरुचिराधरि पृच्छत आगतः पुरत एव गमिष्यति मानिनि ॥१२॥

इति वचनं निशम्य, विशालतरहासविशदवदनाः पार्श्ववर्तिजना- नवलोक्य, द्विजातिवृद्धः 'किमिति मामकीनवार्धक्यजनितविपरीततां हसन्ति भवत्यः, क्रमेण भवतीनामप्येषा भविष्यति' इत्यवादीत् ।

पुनः पप्रच्छ मोदेन क गन्तव्यं त्वयेति सा । यत्र कन्यापरिप्राप्तिस्तत्रेत्ययमभाषत ॥ १३ ॥

वयसा वपुषा च वृद्ध एषो मनसा नेति गिरापि मेदुरा । स्वयमभ्यवधृत्य सा कुमारी पुनरागत्य बभाण सादरम् ॥१४॥

इदानीं भवतो यत्र वाञ्छावल्ल्यधिरोहति । तत्राशु गम्यतां भद्र द्विजवर्य महामते ॥ १५ ॥

इति तस्या मन्दस्मितचन्द्रिकामेदुरवदनचन्द्रिरसुधासारायमाण- वचोधारां 'साधु साधु, सुदूक्तम्' इति प्रशंसमानः, करेण यष्टि-

मालम्ब्य कृच्छ्रादुत्थाय प्रस्खलन्, तदीयविकचविचकिलकुसुमकुल-सुरभिलहंसतूलशयनाधिरोहाय प्रयतमानः, तत्र हस्तावलम्बनवशेन तन्निवारणपरं चेटीनिकरं निवारयन्त्या सुरमञ्जर्या सहर्षमनुमतः, स द्विजवृद्धः क्रमेण सुष्वाप ।

वृद्धं तं तरुणीविलासरसिकं वीक्ष्येव भासां पति-
वृद्धः सत्वरमक्षमाधरगुहाकेलीगृहं प्राविशत् ।
वारुण्याः किलसंगमाय रसिकः स्फाराङ्गरागाञ्चितः
कंदर्पोऽपि शरासनं करतले चक्रे स्वपत्त्रैः सह ॥१६॥

तदनु सकलजनतादृष्टिरोधकरे तिमिरनिकरे विजृम्भिते, तमालन्ति सकलतरवः, पिकजालन्ति विहंगमाः, नीलाचलन्ति भूमिधराः, भल्लूकन्ति निखिलवनमृगाः, कालिन्दीमनुकुर्वन्ति निम्नगाः, इति लोकस्य विभ्रमो बभूव ।

ततः पूर्वाचलप्रान्ते बभौ कुमुदबान्धवः ।
ध्वान्तसिन्धुरसंक्षोभमृगेन्द्रः कुन्दनिर्मलः ॥ १७ ॥

ततो वृद्धः सोऽयं भुवनमहितां गानपदवी-
मतानीरसानन्दं मधुररसनिष्यन्दभरिताम् ।
खगेशः (?) कन्यायाः परिणयकलाकालकलितां
निशम्यार्यं जीवंधर इति शशङ्के सुनयना ॥ १८ ॥

तदनु सा सुरमञ्जरी सहर्षमुत्थाय, अकूजत्काञ्चीकलापमगुञ्जन्मञ्जीरमचलितकरवलयं सखीजनान्पुरोधाय मन्दं मन्दं तदीयशयनोपकण्ठमासाद्य, प्रवयसः पुरतो वयस्याजनं विधाय, स्वयमपि पश्चाद्भागमलंकुर्वन्ती, मालतीलतानां पृष्ठतो रत्नवल्लीव विराजमाना, चकोरनयना भुवनमोहनं गानं शुश्राव ।

तावत्समाप्य चतुरः कलगानलीलां
द्राक्सामगीतमुदयुङ्क्त स मञ्जु गातुम् ।
श्रुत्वा कुरङ्गनयनाः कुतुकेन पूर्वं
गीतं पठेति परितः परिवव्रुरेनम् ॥ १९ ॥

कुमार्यो मम तोषाय भवत्यः कल्पयन्ति चेत् ।
गायते मधुरं गानमिति वाचमुवाच सः ॥ २० ॥

तदनन्तरं तद्वचनं निशम्य हसन्तीषु सकलासु वामनयनासु यथायथं निवृत्य निद्रामुद्रां दधानासु, सा सुरमञ्जरी जीवंधररमणजनितसंतापेनाक्रान्ततनुलता क्रमेण पल्लवशयनमधिशिश्ये ।

तदनु पूर्णि पूर्वधराधरे विलसति मञ्जुरारुणमण्डले ।
द्विजवरस्य समीपमुपागता मधुरयागिवदत्सुरमञ्जरी ॥ २१ ॥

शास्त्रेषु केषु भवतः कुशलत्वमार्य
संगीतशास्त्रवदमन्दगुणाम्बुराशे ।
गाने मनोज्ञमधुरे भवतः समानो
लोकत्रये न हि विना खलु जीवकेन ॥ २२ ॥

इति तस्या अनुयोगं द्विजवृद्धोऽप्येवमुत्तरयामास—

मज्ञासिमम सर्वशास्त्रनिकषग्रोच्छीढधाराधरो
दृप्यद्वादिमदाङ्कुरं न सहते नैर्मल्यनर्मालयः ।
किंचास्माभिरदृष्टपूर्वमिह यच्छास्त्रं तदेतज्जग-
त्याकाशाम्बुजतुल्यमब्जवदने बिम्बानुबिम्बाधरे ॥२३॥

इति तद्वार्तां निशम्य कौतुककोरकितान्तरङ्गा सा सुरमञ्जरी, 'निखिलनयनोत्पलानन्दसन्दायकमुखचन्द्रो जीवंधरः पूर्वं धैर्येण सह मदीयमानसमपहृत्य निर्गतः क्वापि न ज्ञायते, तस्मादितःपरं मम कथं भविष्यति' इति पृच्छां चक्रे ।

इति वाचमसौ श्रुत्वा क्षणं तूष्णीमवस्थितः ।

द्विजातिवृद्धो मधुरमुवाच वदतां वरः ॥ २४ ॥

अयि पयोजनयने, बाह्योद्यानविराजमानस्य कामदेवस्य पूजया प्रसन्नस्य कृपाकटाक्षैः साक्षात्कृतो जीवंधरस्तव मनोरथलतामङ्कुरयिष्यति ।

विचिकित्सा विशालाक्षि नात्र कार्या निरङ्कुशा ।

कामकोष्ठस्य गमने त्वरैव तनुमध्यमे ॥ २५ ॥

तदनु हृदि विदित्वा कामितार्थं करस्थं

कमलविमलनेत्री संगता सा सखीभिः ।

सपदि मधुरशिञ्जन्मञ्जुमञ्जीरपादा

मणिमयमधिरूढा याप्ययानं मतस्थे ॥ २६ ॥

ततश्च चकितसारङ्गविलोचना सा सुरमञ्जरी द्विजवृद्धं पुरोधाय कामालयमेत्य वामालकाभिरालीभिः समानीतसुरभिकुसुमादिभिस्तत्पूजां निर्वर्तयामास ।

रहसि कुसुमबाणं प्रार्थयामास तन्वी

मुकुलितकरपद्मा त्वं तथा कल्पयेति ।

मलयजरसलिप्ते मौक्तिकस्फारहारे

मदुरसि कुचभागे जीवकोऽसौ यथा स्यात् ॥२७॥

इति प्रार्थनामनुसरन्ती कचिदन्तर्हितस्य बुद्धिषेणस्य 'लब्धो वरः' इति वाणीमेणाक्षी कामदेवस्य कृपासारविलसितवचोधारां मत्वा, प्रमोदमेदुरमानसा, किंचित्कंधरां विनिवृत्य, पुरतो विराजमानम्, बहिरागतमिव साक्षात्कामदेवम्, जङ्गममिव कनकगिरिशृङ्गम्, सञ्चरन्तमिव नयनानन्दम्, साङ्गमिव शृङ्गाररसम्, साकारमिवाङ्कुरसमकारम्, सरूपधेयमिव निजभागधेयम्, लक्ष्मीमिवा-

न्यर्धमाकलितहेमशिलातलायमानललाटफलकम्, विशालविवृद्धिरोधाय बद्धसेतुवदायतनासावंशम्, श्रुताङ्गालीलाडोलायमानमणिकुण्डलमण्डितश्रवणयुगलं लक्ष्मीविहारधारागृहशङ्कावदान्यमुक्ताहारकान्तिस्वच्छमलशोभितवक्षःस्थलं रम्भातरुसंभावनासंपादकसुवृत्तोरुयुगलं कोकनदमदहरपदपल्लवं कुरुवीरं विलोकयामास ।

तन्वां रोमाञ्चकम्पौ नयनकमलयोः संमदाश्रुप्रवाहं
वक्त्रेन्दौ मन्दहासं घनजघनतटे घर्मतोयप्रचारम् ।
चित्ते ह्रीभीतिमोहाद्भुतरसमयतां मारसंतापमङ्गे
सेयं सारङ्गनेत्रा कुरुकलममिमं वीक्ष्य तूर्णं बभार ॥२८॥

तदनु पार्श्वतो वृद्धमसमीक्ष्य निर्गलव्रीलतरलनयनां नमितवदनां जीवंधरस्तत्क्षणमालिङ्ग्य, कपोले परिचुम्ब्य, निजाङ्कमारोप्य, चाटुवचनपरिपाटीभिश्चूर्णवासादिकथाभिश्च प्रीतेः परां काष्ठां मापयामास ।

विकचकुसुमतल्पे वृद्धरूपः शयानः
कुरु पदयुगलीसंवाहमित्यब्रवीत्ताम् ।
हृदि विलसितरागां तां तथा कुर्वतीं द्रा-
क्सहचरकुलमेतं वीक्ष्य तुष्टाव हृष्टम् ॥ २९ ॥

ततश्चतुरन्तयानमारुह्य सखीभिः सह निजमन्दिरान्तरं प्रविष्टायां सुरमञ्जर्यां वयस्याजनमुखविदितवृत्तान्तौ मातापितरौ सुमतिकुबेरदत्तनामधेयौ तत्क्षणकन्दलितानन्दमन्थरौ विवाहमङ्गलं विस्तारयितुमारभेताम् ।

ततः कुबेरदत्तेन मुहूर्ते शुभसंगते ।
विश्राणितां वरश्रोणीं करे जग्राह कौरवः ॥ ३० ॥

बालां शम्बरशत्रुशास्त्रपदवीशालां रसाम्भोनिधे-
वेलां श्लाघ्यतमोज्ज्वलद्गुणमणीशीलां मरालीगतिम् ।
नीलाम्भोरुहलोचनां शशिलसत्फालां सुमुक्तावली-
मालां तां रमयन्नयं स्मितसुधालीलापदं प्राप सः ॥२१॥

इति महाकविहरिचन्द्रविरचिते श्रीमति चम्पुजीवंधरे
सुरमञ्जरीलम्भो नाम नवमो लम्बः ।

# दशमो लम्बः ।



ततः कुरुकुमारः सुरमञ्जरीवदनात्कथंचिदुदस्थितानुमतिः, तस्मान्दनान्निर्गत्य सकलसहचरनिकरपरिमेदुरपार्श्वभागः, स्वकीयनिकाय्यमासाद्य, पित्रोर्नेत्राणि पीयूषाञ्जनैरिव रञ्जयामास ।

नतं पादाम्भोजे नयनसुभगं वीक्ष्य तनुजं
परिष्वज्य प्रेम्णा शिरसि पुनराघ्राय च मुहुः ।
दृशा पायं पायं तनयवदनाम्भोरुहसुधां
श्रवोभ्यां वाचाच्चीं सुखममितमातेनतुरिमौ ॥ १ ॥

वासाग्रभूमिं मुदमाससाद गन्धर्वदत्ता तमिमं समीक्ष्य ।
उपागतं गेहमुदारसत्त्वमुवाच चैवं कमलायताक्षी ॥ २ ॥

आर्यपुत्र, सा खलु गुणमाला भवदीयविरहशुशुक्षणिक्लशिततनुलता, क्षणे क्षणे ताम्यति मुह्यति मूर्च्छति च; अतस्तामम्भोरुहाक्षीं प्रथमतः संभाव्यात्रागन्तुमर्हसीति ।

विवेश गुणमालायास्ततो गेहं कुरूद्वहः ।
एकान्ते तां विलोक्याथमालिलिङ्ग च संगतः ॥ ३ ॥

आर्यपुत्रे मन्निमित्त खल्वेतावद्दुःखमनुभूतवानस्यतो मन्दभाग्या मा मा स्मरेदेति सविषादमुक्तो जीवधर, तरुणि तरुणारुणकिरण विकसदम्बुजवदने भवदीयपूर्वकृतसुकृतप्रभावेन वैताढ्या सपृतोऽन्यथा पुनर्बहुतरदुःखमनुभवेयमिति तां समाश्वास्य, क्रमेण गन्धर्वदत्तानिलय निजालय चागत्य, तत्र मन्त्रविदामग्रणीर्गन्धोत्कटेन साकं मन्त्रयित्वा, वयस्यवलयविलसितपार्श्वभागो मनोजवगन्धर्वबन्धनेन स्यन्दनेन कामनीयकसीमाकोशं विदेहदेशमशिश्रियत् ।

धरणीतिलकाख्यया प्रतीतां नगरीं तत्र जगाम कौरव ।

अधितिष्ठति यां स्वमातुल स पतिर्गोविन्दमहीपचन्द्रमा ॥ ४ ॥

तावद्विदितोदन्तेन गोविन्दमहीकान्तेन प्रशासितपुरुषपरिष्कृतासु विकीर्णविकचविमलकुसुमकुलसौगन्ध्यसमाहृतपुष्पंधयझङ्कारमेदुर विविधवाद्यरवमुखरासु दिदृक्षापरवशपौरजनसमर्दनिवारणपरराजचरकरचपलकनकवेत्रलताकान्तिबद्धातपशीलासु हर्म्याग्रनिबद्धपताकापटवितानच्छत्रचामरादिभिर्निवारितदिनकरकरजालासु प्रतोलीषु सक्रीडाद्रिशताङ्गं प्रविशमाना वेलातीतविलोकनकुतूहलचन्द्रशालासमिलितलोलाक्षीजनकटाक्षखेलाकलितनीलोत्पलमालामादधानास्ते जीवधरपुरःसरा कुमारा क्रमेण राजमन्दिरमाविविशु । तत्र च ।

गोविन्दभूपतिरिमं कुरुवंशकेतु

मालिङ्ग्य मोदविवश स्फुटरोमहर्षं ।

आपृच्छ्य सौख्यमखिलाश्च यथोचितं ता

न्समान्य साधु विदधे विविधोपचारान् ॥ ५ ॥

अथ सचिवकुलेन जीवधरेण च सहितो गोविन्दमहीपति कुरुवीर पञ्चाननचञ्चदासने काष्ठाङ्गार च मृत्युवदने कदनेन निधत्सुर्मन्त्रशालामधिष्ठितो मितजनपरिवृतोऽपि रत्नभित्तिसंक्रान्तप्रतिमाभि

रनेकपुरुषपरिवृत इव शोशुभ्यमानः संमन्त्रयितुमारेभे ।

ततो विदितमेदिनीकमनभावकूलंकषा
नयाम्बुनिधिपारगा जगदुरञ्जसा मन्त्रिणः ।
महीश स हि वञ्चनाकलितचित्तवृत्ती रिपुः
प्रतारयितुमद्य नो विनयपत्रिकां प्राहिणोत् ॥ ६ ॥

कदाचिन्मत्तदन्तावलः पाटितालानो निर्मूलितनिगलः संक्षुभितकटकः सकलभटघटादुरासदः सत्यंधरवसुधरापतिमन्दिरोपकण्ठसञ्चारः, कोपान्निर्गतं तमेनमस्मत्प्राणायमानं निहत्य, निखिलपौरलोकं शोकपारावारे मामकीर्तिपूरे च निमज्जयामास ।

अयेन मयि विस्तृतां मिलदकीर्तिमेतां भवा-
न्प्रभाकर इवाम्बुजाकरवरे हिमानीं तताम् ।
विनाशयितुमर्हति क्षितिपते दयावारिधे
ततः पुरमुपागतो मम च मित्रतां लालय ॥ ७ ॥

इति शात्रवसंदेशमाकर्ण्य कन्दलितमन्दहासो गोविन्दमहीपतिर्नीरंध्ररदनारविन्दनर्तितनयनखञ्जनो बभूव ।

नृप मातुल निःशङ्कं मद्भुजोष्मा निरङ्कुशः ।
इमं न सहते शत्रुं तत्कालस्तु प्रतीक्ष्यते ॥ ८ ॥

इति कुरुवीरनन्दनचातुरीनिशमनविरधीरमना धरापतिश्चतुरङ्गबलेन राजपुरीं प्रति गमनं तत्र निजनन्दिनीस्वयंवरलतनं नानादेशनरपतिसंमेलनपरासिनिधनं च निश्चित्य काष्ठाङ्गारस्य संगरदुर्गं प्रस्थापनडिण्डिमं संताडयामास ।

सन्ततामिव सागरं निजबलं नराणां पति-
र्विलोक्य स समादिशन्निखिलतः प्रयाणोद्यमम् ।

चकार च जिनेशिनः पदपयोजपूजां मुदा
बहूनि कुतुकान्वितः सपदि पात्रदानानि च ॥९॥
शुभे लग्ने धीरस्तदनु विचचाल क्षितिपती-
रथारूढो जीवंधरमुखकुमारैः परिवृतः ।
विदूरे सैन्येशाः प्रणतशिरसस्तं परिगताः
पुरस्तात्तत्सैन्यं मुकुलितधराभोगमगमत् ॥ १० ॥
तदा भेरीघोषैर्हयनिचयहेषापटुरवै-
रथानां चीत्कारैर्मदगजघटाबृंहितभरैः ।
जगत्सर्वं तूर्णं स्थगितमभवद्भास्कररथो
रथैरीर्ष्यावेशादिव स पिहितो रेणुनिकरैः ॥ ११ ॥
तदानीं धवलातपत्रडिण्डीरविचित्रा रङ्गत्तुरङ्गमतरङ्गसंगता मत्त-द्विपपृथुयादःकुलकलिता विलोलासिलतामत्स्यव्रातपरिवृता तद्वाहिनी वाहिनीव मजवं निर्जगाम ।
चलति निखिले सैन्ये यद्रेणुपुञ्जमजृम्भत
समृतममितं व्योम्नि स्फारेभयूथमदाम्बुभिः ।
तदिदमगमच्छान्ति शुण्डोद्धतैर्जलशीकरै-
र्हयमुखगलल्लालामालाजालैश्च समन्ततः ॥ १२ ॥
तदनु दुरासदमदाकुलतया ईषदामीलितलोचनैर्दण्डकोटिनिप-ण्णशुण्डादण्डैरुभयपार्श्वावलम्बितवर्णकम्बलतया गैरिकधातुसान्द्रा-न्गिरीन्द्रांस्तुलयद्भिः कर्णान्तावलम्बिकनकाङ्कुशतया कृतकर्णपूरैरिव जङ्गमैरिव कुलाचलैः संख्यातीतैर्दन्तावलैराक्रान्तसकलदिशावकाशम्, मुखभागकलितकनकखलिनैः संमुखागतमाकाशमापिबद्भिरिव चला-चलोष्ठपुटैर्मुहुर्मुहुः कम्पितोदररन्ध्रेण परिपूरितभुवनोदरेण हेषारवेण वेगगर्वधूर्वहं गुरुत्मन्तं निर्भर्त्सयद्भिरिव सादिजनकृतमवनिरोधक्रोध-

घुर्घुरायमाणघोणैः परिस्फुरत्प्रोथपुटेन पदे-पदे मुक्तफूत्कारेण जवनिपीतमनिलमिव नासिकाविवरेणोद्वमद्भिर्मूर्तिमद्भिरिव रंहःसमूहैर्गन्धर्वैर्बन्धुरम्, अतिदूरोन्नतपताकापटतिरोहितरविरथैः सैन्यसागरावतीर्यमानैः संदानितघण्टानगवणात्कारमुखरैश्चक्रक्षुण्णक्षोणीतलैः स्यन्दनैः परिशोभितम्, भिण्डिपालमण्डलाग्रपट्टसपरश्वधद्रुघणप्रमुखायुधधारिणा पादातेन सनाथम्, मायूरातपत्रसहस्रान्धीकृताष्टदिङ्मुखमनीकं पुरोधाय, कैश्चित्प्रयाणैर्गोविन्दराजः क्वचन राजपुरीं निकषा निषसाद ।

तदनु विदितवार्तो माययासौ कृतघ्नो
दधदिव बहु सख्यं प्राहिणोत्प्राभृतानि ।
अयमपि नरपालो लालयंस्तानि सद्य-
स्तदतिशयितमेतत्प्रेषयामास तस्मै ॥ १३ ॥

ततः काष्ठाङ्गारेण निजबलशबलेनाभ्यागत्य बहुधा संमानितो गोविन्दमहीपतिः, राजराजपुरीनिकाशां राजपुरीं प्रविश्य, तत्र विविधरत्नमयविभिन्नस्वयंवरशालां परिकल्प्य, वराहत्रयशोभितचन्द्रकयन्त्रभेदं कन्याशुल्कतया सकलदेशेषु घोषयामास ।

पराःसहस्रं भगिना महीपाः प्रापुस्तदा तां नगरीं गरिष्ठाम् ।
भेरीरवाभीलसमस्तलोकाः सेनारजोभिः पिहितप्रभागाः ॥ १४ ॥

स्वर्गनगर्यामिह तत्र महीशाः सानुयायिनः ।
मञ्चेषु मिलिता भेजुर्दिव्यमिव सुरेश्वराः ॥ १५ ॥

तत्र मन्थनिवहमन्थभ्रमयन्त्रभेदिनमभिमानमहिमानं युवानमवलम्बिनी शशिकलेव मेघोपं शचीदेवीव पुरंदरमलंकरिष्यतीति गोविन्दराजेन कारितमाता निशम्याहमहमिकया चलितेन, वक्षःस्पर्धिस्वमितपार्श्वस्थद्रुमेननकुङ्कुमस्थानकरजःपुञ्जमिश्रितदर्शितेन, आ-

क्षेपडोलायमानमुक्ताकलापेन चलितनवमालिकोड्डीनभृङ्गसङ्घसंस्तूयमानयशोविभवेन, अर्धावलम्बितकर्णपूरचुम्ब्यमानगण्डस्थलेन राजकेन स्वयंवरमण्डपं स्वयमुच्चलितमिवाभवत् ।

यराहयन्त्रमभितो धराधीशाश्रकाशिरे ।
कुलाद्रिं परितः कीर्णाः शिलाखण्डलवा इव ॥ १६ ॥

ततश्च मगधाधिपे विदितशक्तिलेपे भृशं
कलिङ्गनरनायके विपयमस्तशस्त्रायके ।
नृपे च विनतापुरी निहितदृश्यधूलीहरे
शरव्यचलनोदरे मथितयौदनाधीश्वरे ॥ १७ ॥

अयोध्याभूपाले भुवि पतति धैर्येण विकले
तथावन्तीनाथे वितथभुजशौर्ये मितकथे ।
नृपेष्वन्येष्वेवं कुवलयदृशां हासविषये-
ष्वयं काष्ठाङ्गारः कुतुकवशचित्तः प्रचलितः ॥ १८ ॥

तदनु काष्ठाङ्गारो दर्पदुर्ललिताकारः कलभनिभचारः, तद्यन्त्राभोमागभ्रमच्चक्रे पादं निधाय पारवश्येन भुवि पतितः, क्षितिपतिवलयस्य कमलाक्षीजनस्य च हास्यवदान्यो बभूव ।

कुमारेऽस्मिन्धीरे सहचरघटामध्यलसिते
यथा मीरातारागणपरिवृते शीतकिरणे ।
तदानीं गोविन्दक्षितिपतिरदादृष्टिमधिका-
मुदस्थात्सोऽप्येष स्मितविशदवक्त्रः कुरुवरः ॥ १९ ॥

तदनु सखेलं भुवि पदानि निदधानं जयलक्ष्मीनिबन्धननिगलकटकशङ्कावहमरकताङ्गदशोभितं प्रसरणसस्खलन्मुक्तादामप्रभाभास्यमानवक्षःस्थलं जीवंधरमवलोक्य तत्रत्या एवमेवं विदामासुः ।

कुमारं भूपालाः कतिचन विदुर्भूपतिलकं
परे मर्त्याकारस्मरमितममरं संजगदिरे ।
सदेहं कंदर्पं कुवलयदृशोऽवादिपुरुषं
तथा काष्ठाङ्गारप्रमुखमहिता मृत्युमविदन् ॥ २० ॥

एवं सर्वैरवलोक्यमानो जीवंधरो यन्त्रसमीपमासाद्य विद्या-मन्त्रिसुधाकरश्चन्द्रकलानुकारिदंष्ट्राविराजितवराहयन्त्रं चिरं विलो-कमानस्तच्छेदनावसरमीक्षमाणः क्षणाद्धिषक्रमुत्प्लुत्य सज्जीकृत-धनुष्टङ्कारकम्पितवसुधातलस्तद्यन्त्रं महीभुजां दर्पं मानिनां खेदं गोविन्दपार्थिवस्य शङ्कां च युगपच्चापसमारोपितरोपेण भिन्दाय ।

आनन्दोद्रिक्तहृदयो गोविन्दमहिपस्तदा ।
राज्ञां धुरि जगादेवैः श्राज्ञानामग्रणीरिदम् ॥ २१ ॥

धीरो वारिधिमेखलां वसुमतीं भाक्पालयामास यः
तस्य श्लाघ्यगुणस्य मान्ययशसः सत्यंधरस्यात्मजः ।
एष द्वेषिमहीपदावदहनः मख्यातदोर्विक्रमः
श्रीमान्मे भगिनीसुतो विजयते वीरश्रिया वल्लभः ॥२२॥

वसुधाधिपा धनुषि पाटवात्तथा
वपुषि स्फुरद्विशदलक्षणात्क्षणात् ।
क्षितिपालसूनुरयमित्यथास्मर-
प्रवलोक्य तं ललितमभ्यनन्दिषुः ॥ २३ ॥

एवंविधगोविन्दनरपतिवचनेनाशनिगर्जनेन भुजग इव भीत-मानसविकारः काष्ठाङ्गारो मनसि चिन्तामेवं तरङ्गयामास ।

सत्यंधरस्य सूनुश्चेदयं हन्त हता वयम् ।
जागरूका भवन्त्यस्मिन्वीर्यशौर्यपराक्रमाः ॥ २४ ॥

पुरारमदीयामाज्ञां मालामिव शिरसा समादधानो मथनो वाणि-

त्याशमेन कथमासीत् । अत सर्वे स्वार्थपरो लोक इति सत्य मेतत् । किं वास्य मातुल. समाहृत । चिन्त्या मा मदपरिपुष्ट मारम्याय सत्येत्यापनमानरन्तम् । किं करिष्यति मा किंतु नीणराजमदोहेन गोविन्दमहीपालेन सनमाहात्म्यकोऽस्य समीरपुर. स्कृत इव समीरसखः ।

इति चिन्ता कुर्वाणः सर्वेनरगर्विजृम्भितक्रोधेन सुमुक्षमीकेन कन्यामाहर्तुमना मनागितरचलमेदुरेण क्षुद्रसितीशनिकरेण साकं समन्वयितु स दुर्गमग्रामग्रणीर्निजनिवेशमाविवेश ।

पराशायविदा तत कुरुवरेण राज्ञा सह

स्थितेन नयकोविदा सपदि सोपदा केचन ।

पितुर्विषयसंगताक्षरपतीन्मति प्रेषिता.

स्तथा परिचिताननृपान्विशदपत्रिकाभि सह ॥ २५ ॥

सत्यधरक्षितिपतेर्विजयामहिष्या

सञ्जात एष खलु नीवकनामधेय ।

दैवात्तदा विरहित कुटिलाल्पितृभ्या

वैश्याधिपस्य समवर्धिषि मन्दिरेऽहम् ॥ २६ ॥

अथ किल दुराचार काष्ठाङ्गार काष्ठाङ्गाराद्विविक्रयेण प्राण संधारण कुर्वाण क्रमेण युष्मद्नृपतिना मन्त्रिपदवीमारोपित स्तमेव निहतवानिति विदितमेव हि भवताम् ।

अतो मम यथा सोऽयमुच्छेद्यो भवतामपि ।

शत्रुत्वाद्रानघत्वाच्च कृतघ्नत्वाद्दुराशय ॥ २७ ॥

रसातले वा वसुधातले वा महीधरे वा विपिनान्तरे वा ।

तिरोहितश्चेदपि हन्यतेऽसौ तत समागच्छत वाहिनीभि ॥२८॥

संदेशमेव कुरुकुञ्जरस्य सामन्तभूपा शिरसा दधाना ।

सत्यंधरे भक्तिवशेन नुन्नाः सेनासमेता मिलिता बभूवुः ॥ २९ ॥

तानन्यविशालो नाम कुरुवीरदूतः, सचिववृद्धस्य नयपारगस्य धर्मदत्तस्य निकेतने प्रविश्य, तेन विदितोदन्तेन संधानाय नरेन्द्रमन्दिरं नीयमानः, तत्र परिमितैर्नरपालैः परिवृतम्, अनतिदूरावस्थितेन सविनयप्रवनमितपूर्वकायेन मथनेन सविस्रम्भमालपन्तम्, क्रोधकृशानुविस्फुरन्निश्वासधूमविवर्णमुक्ताहारं काष्ठाङ्गारमुपजगाम। तत्र धर्मदत्त एवं जगाद।

जानाति देवः सकलं तथापि श्रोतव्यवाचः सचिवा नृपेण।
नाकाधिराजोऽपि निरीक्ष्यकल्यो बृहस्पतेर्वाग्विसरं शृणोति ॥ ३० ॥

इदानीमुदारसत्त्वैर्गरुडवेगगोविन्दपद्मनवल्लभप्रभृतिभिः खेचरतदितरमहीपालैर्नन्दाढ्यप्रमुखैर्महावीरैः सहचरैश्च परिवृतः कल्पान्तजलधिरिव निरर्गलप्रसरः सकलजगतीतलविख्यातवीरो जीवंधरकुमारः क्रुद्धो युद्धाय बद्धादरो वर्तते।

व्याधान्दुःसाध्यबाधान्गजतुरगमुखैर्मद्बलैः संप्रवृत्ते-
र्हेलामात्रेण जित्वा निखिलपशुगणं मोचयामास यः प्राक्।
वीणाशुल्के न दृप्यन्नरपतिनिचयं धावयामास संख्ये
सोऽयं नैकोऽपि जय्यः किमुत खगनराधीश्वरैः संगतश्चेत् ॥ ३१ ॥

अत इदमनिदंप्रथमप्रवृत्तं तदीयराज्यपदं तस्मै समर्प्य यथापुरं सचिवपदमधिष्ठातुमर्हति देव इति।

एवं मन्त्रिगिरं निशम्य समयं तूष्णीं स्थितः सोऽस्वद्-
रकर्णो लभमुखेन तत्र मथनेनादीपितक्रोधनः।
रे रे केन गजागमं बहुतरं दृष्टोऽग्रमे वक्तुं पुरो
भीरुत्वं यदि निज वैरमनि मुधा क्लीबोऽसि किं भाषितैः ॥ ३२ ॥

माद्यद्दन्तिघटापटुस्फुटनटद्घोटप्रहृष्यद्भटा-
योपाच्छादितदिक्तटे रणतले खड्गोल्लसद्धारया ।
आहृत्य श्रियमाहवोद्यतरिपुक्षोणीभृतामुज्ज्वलां
कीर्त्या कोमलया दिशो धवलयाम्युत्फुल्लकुन्दश्रिया ॥३३॥

किंच ।

आ जन्मतो न लिखितं भुवनाधिपत्यं
यद्भालसीमनि परं तु वणिक्क्रियैव ।
तेनाधमेन वणिजस्तनयेन किंवा
संधानमद्य नरपालमणोशिनां नः ॥ ३४ ॥

ध्वजिनीरुद्धपार्श्वस्य मथनस्य शरावलेः ।
विघसोऽजनि यः पूर्वं कवलीक्रियतेऽधुना ॥ ३५ ॥

इति दर्पदुर्ललितवचनविलसितमाकर्ण्य कोपारुणीकृतभालो नय-
विशालो गम्भीरामिमां गिरमुज्जगार ।

पुलिन्दवृन्देन गवां कुले हृते बलेन साकं मथने पलायिते ।
पिधाय वेगेन कवाटमन्ततो धृतो वधूभिस्तनुकम्पमत्यजः ॥३६॥

एवंविधपराक्रममण्डितभुजदण्डमण्डितस्य न युक्तमेव कौरवेण
संधानम् ।

किं धर्मदत्तेन हि पण्डवृत्त्या प्रचण्डवृत्त्या भवतापि किंवा ।
कुरुप्रवीरस्य कराग्रलग्नं राज्यश्रियं चक्रमलं प्रदातुम् ॥ ३७ ॥

इति निगद्य जवान्निर्गत्य यथावृत्तं कुरुवीरं विज्ञापयति
नयविशाले विशालतरसमीकसंनाहः कुरुकुमारः पद्मास्यं वरू-
थिनीनामाधिपत्ये विधाय यथायोग्यं गरुडवेगगोविन्दलोकपालपल्लव-
महीपालप्रभृतीनापृच्छ्य रणाङ्गणावतरणाय सेनामादिदेश ।

काष्ठाङ्गारोऽपि सेनायाः पतिं मथनमादिशत् ।

क्षत्तनायाः प्रयाणाय रणरङ्गस्थलं प्रति ॥ ३८ ॥

तदनु विकटकटविगलद्दानधाराप्रवाहानुभयतः सृजद्भिः सनिर्झरैरिव नीलाचलैर्विशददन्तप्रभादन्तुरिताङ्गतया रजनिकरकरनिकरचुम्बितसंवर्तकालाम्बुदविडम्बकैः कर्णद्वयसंदानितधवलचामरशोभिततया पद्मिनामसाम्येन समागतमरालशङ्कामङ्कुरयद्भिः पादन्यासेन महीं कम्पयद्भिः घनाघनघनगर्जितानुकारिबृंहितरवेण गिरिदरीसुखसुप्तपञ्चास्यान्क्रोधेनोत्पत्य कुतस्त्योऽयं करिशब्द इति निरीक्षमाणान्कुर्वाणैर्वारणैः सञ्छादितदिग्भागाः, सूर्याश्वशिरस्ताडनायेवोर्ध्वप्रसारितपूर्वचरणयुगलैः प्रलयजलधरविमुक्तवर्षोपलासारपरुषेण जर्झरयतेव वसुधातलमतिनिष्ठुरेण खरखुरपुटविन्यासेन जनितपांसुपरंपरीभिः सकलजगदन्धंकरणधुरीणैर्हेषितरवेण गगनतलं पूरयद्भिः प्रतिपक्षैरिव गरुत्मतः पर्यायैरिव मारुतस्य प्रत्यादेशैरिवोच्चैःश्रवसो निदर्शनैरिव मनसो मूर्तैरिव नवैर्गन्धर्वैरूपशोभिताः, धुरायमाणसकाशेऽश्वक्षुण्णक्षोणीतलैर्मनोरथैरिवामितरथैः परिपूर्णाः, क्ष्वेलारवबधिरीकृतलोकैर्विविधायुधविचित्रैर्विधृततनुत्रैः पदातिभिः परिवृताः, उभयेऽपि सैनिकाः, क्रमेणाजिरङ्गणमगाहन्त । तत्र च,

अभ्रंलिहानां पटमन्दिराणां पङ्क्तिर्बभौ शारदमेघशुभ्रा ।
विचित्रयुद्धस्य विलोकनाय समागता राजपुरीव साक्षात् ॥३९॥

तदनु विनिर्मितविशालविशिखासहस्रविराजमानम्, मदमेदुरसिन्धुरघटान्धकारितदिङ्मुखतया जलधरदिवसायमानम्, अभ्रङ्कषैरपहसितरजताचलशोभैरमलसुधावदातैर्मन्थानगिरिमथ्यमानदुग्धसिन्धुगर्भविलुठत्तरङ्गायमाणानिलडोलायितसितध्वजतया उपरिपरिपतदभ्रगङ्गाप्रवाहैरिव तुषारगिरिशिखरैः पटमन्दिरैर्विभ्राजितम्, नीलकवचावगुण्ठितदेहैः सितोष्णीषैरत्युन्नतवेत्रासनोपरिविष्टैर्धर्ममयैरिव धर्माधिकारिभि-

महापुरुषैस्तन्तन्यमानसेनासंविभागसंविधानम्, स्फुरितनिशितकरधृतकरवालमतिविभ्रमरोहकरालितातपेनोत्तीर्णावरुद्धमौलिकलापेन धवलचन्दनलिप्तभुजदण्डेन सेवकजनेनाध्यासितद्वारदेशम्, विविधवस्तुविचित्रितैः पण्याहरणसंमर्दनपरक्रयिकविक्रयिकलोकैर्महाविपणिपथैरुपशोभितम्, यौवनमदमत्ततरुणजनानुसार्यमाणतरुणीजननिरन्तरवेशवाटम्, विविधायुधसंस्कारपरजनवंभ्राम्यमाणशाणचक्रप्रभृतिसंस्कारसाधनैसंछादितं तद्रङ्गस्थलमशोभत ।

युद्धनारम्भकेलीपिशुनजयमहावाद्यघोषैरशेषै-
हैषारावैर्हयानां मदमुदितकरिवृंहितैर्जृम्भमाणैः ।
रथ्याध्वानैः पदातिप्रचुरतरगलत्सिंहनादैरमन्दैः
शब्दैकाम्भोधिमग्नं जगदिदमभवत्कम्पमानं समन्तात् ॥४०॥

रणान्तरायं कुर्वाणा धूल्यो या व्योम्नि जृम्भिताः ।
तन्नाशाय ध्वजा मृत्युसंमार्जन्य इवारुचन् ॥ ४१ ॥

उद्यन्निस्साणराणप्रसरमथ सुरा जृम्भमाणं निशम्य
क्षीबक्षोणीपतीनां कदनविलसितं वीक्षितुं संप्रवृत्तम् ।
पुष्पाण्याहृत्य कल्पक्षितिरुहवनतः सौरभाकृष्टभृङ्ग-
व्यूहव्यारावपूराण्यधिककुतुकतः संगता व्योमसीम्नि ॥४२॥

सेनापयोधी समराहहासौ शनैः शनैः संघटितौ व्यभाताम् ।
कल्पावसाने खलु वर्धमानावम्भोनिधी मद्रमन्दवेगौ ॥ ४३ ॥

पत्तिं पदातिस्तुरङ्गं तुरङ्गो मदेभं मदेभो रथस्थं रथस्थः ।
इयाय क्षणेण स्फुरद्युद्धरङ्गे ध्वनज्जैत्रवाद्ये स्वनाच्छिन्नजीवैः ॥४४

दृप्यद्दन्तिकरोद्धता जलकणा व्योम्नि स्फुरत्तारका-
कारा रेजुरभूच्च नाकसुदतीवक्त्रं निशानायकः ।

धूलीभि. पिहिते च चण्डकिरणे संग्रामलील्य वभौ
निर्दोषापि विभावरीव सततं क्रीडद्द्वयाङ्गापि च ॥ ४९ ॥

यावन्नाक्षिपति क्षणेन करिणो वक्रच्छदं विस्तृत
हस्त्यारोहवरः प्रतिद्विपगतो वीर. शरैस्तावता ।
शुण्डा तस्य मदं च लोपमनयत्कोपेन सोऽप्युद्धतः
छिन्नेनैव करेण तं प्रतिभटं मूर्च्छास्पदं द्राग्व्यधात् ॥ ४६ ॥

भल्लैः प्रतिद्विरदपृष्ठधनुर्विमुक्तैः
कुम्भेषु मर्मशिखरेष्वथ लसन्गजेन्द्राः ।
आरावहीनवदनैः शिखिना समूहै
राकुंठतुङ्गशिखरा इव शैलवर्गाः ॥ ४७ ॥

इह खलु, कोचन, मत्तदन्तावली, कीचतरली, समीककला-रुशली परस्परदण्डसघट्टनजनितगम्भीरारावेण, बृंहितरवेण च गगन-तल पूरयन्तौ, गण्डतलविसृत्वरमदधारासौरभमधुरकर्णतालविगल-त्ममीरैरानिरङ्गतले मूर्च्छितान्भटान्मबोधयन्तौ, सुभवालौ, सविध-नत्नटितपदविन्यासेन, वसुंधरा स्थपुटितामादधानौ, पूर्वपश्चिम-मर्मारममीरितो सजलजलदाविवापतन्तौ, सकललोकजननतनूरुहसौख्य-दायनिक, भयानक, समीकमातनुतः ।

आयोधन निघ्नतोर्गजयो. कयोश्चि-
दन्तप्रघट्टनजनिताग्निकणाः स्फुरन्त. ।
हेमप्रदीप्रवलयावलिखण्डतुल्या
मार्जितचामरगताः सुभटैर्नु दृष्टाः ॥ ४८ ॥

कश्चिद्गज. प्रतिभट चरणे गृहीत्वा
संग्रामयन्दिवि रुषा परुषप्रचारः ।

चिक्षेप दूरतरमूर्ध्वमयं च मानी
द्रागेत्य कुम्भयुगलीमसिना बिभेद ॥ ४९ ॥

इभेन्द्रतानां नवमौक्तिकानां वर्षेण संख्ये निरवग्रहेण ।
मुक्तामयत्वं दधती च रङ्गस्थली गदाढ्या बत संबभूव ॥५० ॥

निपात्य कंचिद्भुवि शुण्डयारिं दन्तेन हन्तुं करिणि प्रवृत्ते ।
दन्तान्तरालं प्रविशन्स धीरश्चिच्छेद शुण्डां करवालवल्ल्या ॥५१॥

चक्रेण कृत्तं निजमेव हस्तमग्रप्रदेशाद्धरणौ पतन्तम् ।
पिपेष पादेन रुषा परीतः करेणुराजः क्षुतरक्तपङ्कम् ॥ ५२ ॥

गृहीतो नागेन प्रतिभटवरः पुष्करगतो
वितन्वानो डोलामसिनिहितहस्तेन करिणा ।
पदा पेष्टुं नीतः सपदि पदमध्ये प्रचलितो
गृहीत्वा वालाग्रे व्यसुमसुमधान्मुष्टिहतिभिः ॥ ५३ ॥

तत्र फुल्लकुन्दकुसुमावदाता जितवातजवना वाजिनो गगनतलो-त्क्षिप्ताग्रपादतया नभःस्थलमाक्रमितुमिव प्रवृत्ताः, पुरतः पतितानि महाशैलकुलानीव दन्तावलशरीराणि लङ्घयन्तः, संगरसागरे पर-स्परं कलहायमानाः कल्लोला इव विरेजिरे ।

खुराघातैः कश्चित्प्रजवनहयः कम्पितधरः
पृषत्कैः कीर्णाङ्गोऽप्यविरहितशिक्षानुसरणः ।
पदे खड्गच्छिन्नोऽप्यहितसुभटेनापतदसौ
न तावद्धावत्सं न निजवरसादी निहतवान् ॥ ५४ ॥

छिन्नेऽपि दक्षिणभुजे करवालवल्लीं
वामे करे विचलयाम्बुपुमाप सादी ।
वीरस्य तस्य रिपुखण्डनकेलिकाया-
मक्षीणशक्तिरगमत्स हि दक्षिणत्वम् ॥ ५५ ॥

अश्वारोहैः कृत्तदण्डानि भूमौ पर्यस्तानि स्फारच्छत्राणि रेजुः ।
रूप्यस्थालानीव क्लृप्तानि मृत्योराहाराय प्रौढचन्द्रद्युतीनि ॥ ९६ ॥
खड्गैः कृत्ता वाजिनां वक्त्रभागा रक्तस्रोतो नीयमाना जवेन ।
मग्नाङ्गानामुन्मुखानां हयानां भ्रान्तिं तेनुः पश्यतामाजिरङ्गे ॥ ९७ ॥

भटानां रोषेण प्रतिभटसमीपं प्रचलतां
समुद्याता रेजुश्चलदसिलताः पाणिकलिताः ।
भुजश्रीखण्डद्रुमकरकुहरोद्यद्विषधरा
रिपूणां प्राणालिं कबलयितुकामा इव तदा ॥ ९८ ॥
समीकपदवीविदः समदसिंहनादा भटा
ववल्गुरमितैः शरै रचितमण्डपाः पुष्करे ।
निरस्ततपनातपश्रमभराः क्षणाङ्कुरैः
शरीरनिकरैर्यशःस्थिरतनूर्भुवि प्रेप्सवः ॥ ९९ ॥

तत्र समीककलाविपश्चिदाश्चर्यवृत्तिः पदातिः, केनचित्पटवेगेन भुजभ्वनतिर्पेगार्पितवैजयन्तीतुलितां कृपाणीलतां विप्राणेन 'इदं मदीयनामधेयपूर्वभागं बिभर्ति' इति रोषादिव पदद्वये निकृत्तोऽपि, अखण्डितमात्मसत्त्वमिव घनवंशजातं चापमालम्ब्य, शूरो न पपात ।

नीलाभ्रतुल्ये कवचे भटस्य नीते प्रभेदं करवालवल्ल्या ।
तत्र प्रवृत्ता घनशोणितालिः सौदामिनीसाम्यमवाप दीर्घा ॥ १०० ॥
कश्चिद्भटः शत्रुशरैः परीतसमस्तदेहः समिति व्यलासीत् ।
यथा महीध्रः प्रचुरप्ररोहो यथा च नागाततचन्दनद्रुः ॥ १०१ ॥

वीराग्रेसरः पदनरः प्रथितारिपुमण्डलाप्रखण्डितमस्तकविगलद्रुधिरधाराभयङ्करसुखभागतया बहिःप्रसृतया क्रोधपरंपरया परीत इव मृत्युमूर्तिं दधनरमुर्णापिञ्च प्रभुकार्यापरिसमाप्तौ प्राणोत्क्रमणं

निरोद्धुमिव निग्रह्य करे कृपाणं मनसि धैर्यं सपत्ने दृष्टिं महीतले रिपुशिरःसहस्रपतनं च युगपदातन्वानः ऋतुभुजां श्लाघानां पुष्पवृष्टीनां च पात्रमजायत ।

सैन्यद्वये तत्र विमिश्रितेऽपि विशेष एष व्यलसद्रणाग्रे ।
स्वीयाः पराश्च पदगाः पुरस्ताद्ये सम्मुखास्ते रिपुसैन्यवर्गाः ॥६२॥

तदानीं रिपुशरनिकृत्तचापलताश्चापलकरवालैर्भग्नकरवाला या गिभिश्छिन्नपाणयश्चरणैर्भिन्नचरणा दुर्वचनैः क्रोधपरीता योधाः परस्परमाजघ्नुः । एवं शब्दपूरितगगनजयानके भयानके समीके विजृम्भिते मथननिर्मुक्तनाराचधारापातेन दीनां निजसेनामालोक्य करकलितकार्मुकलताविस्फारघोषेण द्विविधानपि महीभृतः कम्पयन्कोपारुणास्यः पद्मास्यो वेगवितत्तचक्रस्पन्दनेन स्यन्दनेन विपक्षवाहिनीं द्विपदानिवाभिदुद्राव ।

पद्मास्यमहिताः प्रभूतविशिखा सेनान्तराले रिपो
योधास्तत्र सहस्रशो निपतितान्प्रसौ व्यधुः पङ्क्तिशः ।
घोरान्पाटितविग्रहान्गजघटा प्राणालिभिर्दुर्घटा
कूजच्चापधरान्वहच्छरशिराश्चक्रुर्व्यसून्सयुगे ॥ ६३ ॥

तस्यामितैः शरगणैर्गगनं रिपूणां
सैन्यं च पूरितमभङ्गनसप्रहारैः ।
भूमिश्च भग्नभटवाजिगजैः परीता
हाहारवैरखिलस्य दिशावकाशः ॥ ६४ ॥

द्विपतां तत्पतीनां च नयास्त्रैर्निघ्नतां मृजन् ।
पद्मास्यः प्रीणयामास निजसैन्यनरीपतिम् ॥ ६५ ॥

शरास्तदानीं जलजाननस्य नामाक्षराणां मलिता न भूतात् ।
इतीव राज्ञां हृदये प्रविष्टाः प्राणानगृह्णन्त न रक्तलेशम् ॥ ६६ ॥

एवं निजध्वजिनीक्षोभमालोक्य तत्क्षणकन्दलितकोपौ मगध-मागधभूपौ कुटिलीकृतचापौ निर्निरोधप्रचारेण रथेन क्षोणीतलं क्षोभयन्तौ निजसैनिकशिखावलम्बनगर्जितायमानसिंहनादेन वैरिमन-धैर्यमुन्मूलयन्तौ जवेन पद्मास्यमापतताम् ।

तं मागधमहीपालं स्वर्भानुरिव भास्करम् ।
दुधाव रथिनं वीरो देवदत्तो धनुर्धरः ॥ ९७ ॥

तदनु करलाघवकोरकितधनुर्लतारिनिरन्तरनिर्मुक्तशरनिकरदूरो-त्सारितनभःस्थलसंमिलितामरलोकं पाणिपात्रस्थकीलालपाननिरुत्सुके-र्विस्मयस्तिमितलोचनैरतृप्तोत्तालैर्वेतालैर्विलोक्यमानशरसंधानमोक्षणम-न्योऽन्यास्त्रसंघट्टसञ्जातप्रोज्ज्वलत्प्रचुरविस्फुलिङ्गपरंपराविस्त्रासितकुञ्जर-कुलं वैमानिकजनसीमातीतश्लाघाविषयभूमाश्रितं सकलवीरजनोत्साह-दानशौण्डं प्रचण्डतरदोर्दण्डयोर्मथनपद्मास्ययोर्मागधदेवदत्तयोश्च वा-चामगोचरं समरमुदजृम्भत ।

मथनदलितान्बाणान्दृष्ट्वा निजान्बहुशस्तदा
कमलवदनः सोऽयं कर्णान्तनर्तितशिञ्जिनिः ।
विततविशिखैः सूतं केतुं च तस्य विभेद्य-
न्निजगलगर्जितसहध्वानैर्नभः समभेदयत् ॥ ९८ ॥

ततश्च दुर्धर्षमर्मपाटलच्छदनेन मथनेनार्धचन्द्रेण निकृत्ते निजचा-पगुणे, पद्मास्यः, करतलताण्डवितकोदण्डान्तरसमारोपितकाण्ड-प्रकाण्डे रिपुमण्डलानि खण्डयन्, तस्य सपत्नस्य शरासनं समरोत्साहं च युगपद्विदारयामास ।

ततोऽदृष्टदेवदत्तमचलकरतलात्पत्रिणो युद्धरङ्गे
पेतुः प्रोद्भूतपक्षाः कतिचन गमने तस्थुरुच्चद्रयाढ्याः ।

श्लो. ९९. उच्चद्रयाढ्याः, आविर्भवल्ला कान्त्या पूर्णाः ।

लेखानां मेघमार्गे पिहितपरिलसत्सौरभाणि प्रकामं
तस्थुः पेतुश्च जीवंधरनिखिलबले कानिचित्पुष्पकाणि ॥६९॥
यत्र यत्र रिपुवाहिनीतले पुण्डरीकमुदयत्कबन्धके ।
आविरास बहुधा शिलीमुखास्तत्र तस्य जयिनः समापतन् ॥७०॥

एवं देवदत्तस्य रणमत्तस्य दुर्ललितदोर्दर्पविजृम्भितमसहमानः किरीटखचितकुरुविन्दमणिवृन्दप्रभापुनरुक्तवदनवनजकोपारुणकान्तिप्रसरः परंतपप्रतापो मागधभूपः करनर्तितचापलतानिर्मुक्तबाणगणानन्तविपक्षपक्षदुर्मदः पञ्चषैः पृषत्कैर्देवदत्तस्य रथघोटान्पातयामास ।

निशितविशिखवर्यैर्विश्रुतो देवदत्तः
कवचमथ विभिन्दन्मागधेशस्य कोपात् ।
उरसि निहितशक्तिस्तस्य शार्ङ्गं विलुम्प-
न्नपि विमलकीर्तिः पातयामास शत्रुम् ॥ ७१ ॥

ततश्च प्रभोः प्रतापमिव भुवि पातितं महावीरं मगधभूपालमवलोक्य क्रोधसंज्वलन्नयनविगलद्विस्फुलिङ्गः कलिङ्गभूपालः कुटिलितभ्रूभङ्गभीषणवदनः कर्णान्ताकृष्टचापनोदितरोपवर्षेण धर्षितपरमर्मा हर्षितनिजचतुरङ्गबलः पातितकोटगजघटाभटपटलः सरभसमेव कौरवसेनां क्षोभयामास ।

विहायसि विहारिभिः शरगणैः कलिङ्गेशितु-
र्भयाद्द्रुतमपासरन्न परमाकुला निर्जराः ।
क्षितौ च रिपुसैनिका दिशि दिशि क्षणाद्धाविताः
स्वसैनिकभयोद्यमा निजकशस्त्रसङ्घात्तथा ॥ ७२ ॥

विस्फारघोषैर्गगनं पूरयन्हर्षयन्बलम् ।
श्रीदत्तोऽभिजगामैतं मृगेन्द्र इव कुञ्जरम् ॥ ७३ ॥

---

श्लो. ७०. पुण्डरीकम्, श्वेतच्छत्रं सिताम्भोजं च ।

तदानीं सकलवीरजनकर्णाभरणायमानभुजप्रतापयोः श्रीदत्त-कालिङ्गभूपयोः परस्परनिकृत्तविशिखमनिमेषैरप्यलक्ष्यशरसंधानमोक्ष-णमगोचरजयपराजयमदृष्टपूर्वं त्रिदिवसदामद्भुततरं समरमुदजृम्भत ।

श्रीदत्त एष करनर्तितचापदण्ड-
माकृष्य संयति तथा विशिखान्मुमोच ।
एको यथा दशगुणक्रमतः प्रवीरा-
नाक्रम्य कृन्तति जवाद्रिपुसैन्यवर्गे ॥ ७४ ॥

श्रीदत्तो रन्ध्रमन्विष्य शरैस्तस्य महीपतेः ।
पातयामास मकुटं प्रगर्जञ्छिरसा सह ॥ ७५ ॥

तदीयमकुटोद्गतैरमितमौक्तिकैः पातितै-
रराज समराजिरं पतितभूमिभृन्मस्तकम् ।
कलिङ्गवसुधापतिप्रथितराज्यलक्ष्म्यास्तदा
विकीर्णमिव विस्तृतैर्नयनबाष्पबिन्दूत्करैः ॥ ७६ ॥

तदनु भासां निधौ पश्चिमपयोनिधौ निमज्जति शोकहर्षपारावा-रनिमग्नाः, कमलेषु मुकुलीभवत्सु मुकुलीकृतसमरविभ्रमाः, जग-देकवीरे मारे समधिरोपितशरासनगुणे क्षणादवरोपितचापगुणाः, उभयेऽपि सैनिकाः सकटकमुपमासेदुः । अपरेद्युः काष्ठाङ्गारेण रिपुजनगहनाङ्गारेण बहुधा प्रोत्साहितविजयकथनो मथनः प्रतिफलि-ततपनबिम्बप्रभापिञ्जरितदिशावकाशाः कवचधारिभिरिव रिपुसेनासमुद्रमा-जिरङ्गमाजगाम ।

अनीकिनीं पुरोधाय पश्चात्स्थोऽपि रणाङ्गणम् ।
आमथ्नाद् परावारसेनराशिरासंगतः ॥ ७७ ॥

तदनु मथनपश्चात्स्थाभ्यां निर्लोकितमुखभागाः कोणघातडितनिस्साण-प्रभृतिविविधवाद्यघोषाहूतानिमेषनिरन्तरान्तरिक्षप्रदेशाः, करितुरगरथपत्ति-

भिन्नसिंहगर्जनभयतर्जितदिशावशावल्लभाः, नूतननिकषकषणनिर्मूली-कृतकरचलितकरवालवल्लिकाप्रतिबिम्बितरविबिम्बतया मूर्तीकृतमिव निजप्रतापमाबिभ्राणाः, उभयेऽपि वीराः श्लाघायोग्यं युद्धं विधातु-मारभन्त ।

कन्दनदुर्दिनमसंशिखावलः करतलीकृतकार्मुकनीकरः ।
स मथनः मचचाल रणाजिरे विपिनदेश इवोद्धतकेसरी ॥७८॥
विपाट्य घोटान्गजतां निपात्य भटान्विभिद्य क्षितिपैः सहायम् ।
संक्षोभयामास कुरूद्वहस्य बलाम्बुधिं मन्दरवत्पयोधिम् ॥७९॥
प्रधाव्य वेगादथ माजिसीम्नि पद्मानन्स्तस्य पुरो बभूव ।
काम्पिल्यकेशस्य स पद्मेशो.लाटाधिराजस्य च बुद्धिषेणः॥८०॥
महाराष्ट्रमहीशस्य गोविन्दधरणीपतिः ।
अन्येषां पुरतस्तस्थुर्नन्दाढ्यविपुलादयः ॥ ८१ ॥
समापतन्तीः सहसा समन्तादनीकिनीः पद्ममुखप्रवीरः ।
प्रत्यग्रहीदेष शरप्रचारैः स्रोतस्विनीरेक इवाम्बुराशिः ॥८२॥
सौजन्यमानते कुर्वन्नन्यमुक्तशरानपि ।
शरान्मुमोच पद्मास्यो न.परान्मापि लाघवम् ॥ ८३ ॥
मथनेन शरावलिं तमिस्रां सृजता तत्र निशामुखायितम् ।
विशिखैः किरणैर्विभिन्दता तां जलनाथेन निशाकरायितम्॥८४॥

एवं परस्परशरखण्डनेन प्रणकथानभिज्ञगात्रयोः, विस्मयविस्ता-रितलोचनैः श्लाघोन्मुखैर्नीहमुखैर्निरन्तरं निरीक्ष्यमाणयोः, दिगन्त-विसारिभिः शरासारैराकाशं मूर्तमिवादधानयोः, प्रवीराभिलाषिणोभयोः समीपे मुहुर्मुहुर्गतागतक्लेशमविगणय्योत्सर्पन्त्या जयश्रिया दृढ-मालिङ्गितवपुषोः, साहसविलोकनसमयनुरपृष्टकल्पतरुकुसुमसुरभित-भुजयुगलयोः, चक्रीकृतचापलीलामध्यविराजमानशरीरलतया परिवेष-

मध्यगयोः परस्परसंमुखयोरिव दिवाकरयोः, प्रवीरयोरनयोः समरक्रीडामातन्वतोः, कुपितवदनो मथनः, पद्माननस्य कार्मुकगुणं विभिद्य हर्षेण भगर्जन्, इमं व्याहारमुररीचकार ।

चापस्य जीवविच्छेदात्किं धावसि भयाकुलः ।
ननु रे भवतोऽप्येवं जीवमेष हरिष्यति ॥ ८५ ॥

इति कुपितमवेत्य पद्मवक्त्रः स्फुटतरमाह गिरं गभीरनादः ।
अयि मथन ममास्ति चन्द्रहासः परिहृतशत्रुसतीमुखेन्दुहासः ॥८६॥

इति कृपाणमुत्पाट्य करे विचलयन्, शताङ्गोत्तुङ्गादुत्प्लुत्यामन्दतरलाघवाक्रान्तशात्रवानीकः पञ्चाननसत्यानीकपराक्रमः पद्माननः, कदनदुर्मदविलासितस्य मथनस्य शिरसि समुत्खातकरवालं निचखान ।

मथने भुवि पातिते रणाग्रे नळनास्ये निपपात पुष्पवृष्टिः ।
रिपुसैनिकनेत्रतोऽम्बुवृष्टिः कुपिताश्मगणाच्च बाणवृष्टिः ॥ ८७ ॥

तदानीं कौरवबलकोलाहलमाकर्ण्य प्रवृद्धकोपौ कुटिलीकृतचापौ तपननिकाशप्रतापौ लाटकाम्पिल्यकभूपौ बुद्धिषेणपद्मवरानयोरभिमुखं तस्थिवांसौ दिशावकाशनिभिडितसायके हर्षितनिजनायके वैमानिकजनसीमातीताद्भुतहर्षदायकं भयानकं समीकमाकल्प्य कल्पान्तदहनसकाशे तयोः शरनिकरहुताशे पतङ्गौ बभूवतुः ।

महाराष्ट्रविदेहेशोः समरं समजृम्भत ।
दारुणं शरसंभिन्नवारणं भयकारणम् ॥ ८८ ॥

प्रदीप्रशरसङ्कटं प्रचुरदीर्णटप्पङ्कटं
निलिम्पजनसंस्तुतं निखिलशस्त्रलीलायितम् ।
प्रदर्शकनिदर्शनं मथितयुद्धविद्याविदां
विनेतुरिमौ तदा विविधसंगरं भीकरम् ॥ ८९ ॥

गोविन्दराजस्य शरेण लूनं शीर्षं रणे तस्य धराधिपस्य ।
राहुभ्रमं तीव्रकरस्य कुर्वंस्तत्कीर्तितुल्ये दिवि केतुरासीत् ॥९०॥

एवं निजपृतनायां महतां राज्ञां निधनं निशम्य विशालतरामर्षः काष्ठाङ्गारः, सर्वाभिसारेण निजबलं पुरोधाय, तेजोविभवविजितविकर्तनप्रतापान्भूपानहितजनमृत्युसरूपान्कौरवजनसंक्षोभाय प्रेषयामास ।

कारं कारं बलोत्साहं तेषां क्षोणीशिनां रुषा ।
पुरो बभूव नन्दाढ्यः करिणामिव केसरी ॥ ९१ ॥

ततश्च यदुचितं सकलवीरश्लाघानाम्, यद्युक्तं जीवंधरानुजस्य, यदुदाहरणं पाण्डवयुद्धानाम्, यत्समुचितं नीतिमार्गाणाम्, यदासेचनकं लेखलोचनानाम्, यदानन्दनं निजसैनिकानाम्, यन्निदानं कुन्दनिर्मलकीर्तिकल्लोलानाम्, यद्रङ्गस्थलं जयलक्ष्मीताण्डवस्य, यदधिकरणं कल्पद्रुमानल्पपुष्पवृष्टीनाम्, यदगोचरपदं कविवचनविलासानाम्, तादृशमायोधनं नन्दाढ्यः कन्दलयामास ।

वीरस्य तस्य निशितैर्घनकङ्कपत्रैः
संपूरिते नभसि युद्धमपश्यमानाः ।
जोषं निषेदुरमरा युधि वीतदेहा
वीराश्च सूर्यमनिरीक्ष्य चिरं ववल्गुः ॥ ९२ ॥

तस्य मार्गणविभिन्नशरीरैरुत्पलायितमरिव्रजवीरैः ।
शोणितप्रसृतवाहिनीगतैरुत्पलायितमिभावलिखण्डैः ॥ ९३ ॥

अनासया तेन निपीड्य मुक्ता विलक्षतां प्रापुररिप्रवीराः ।
न पत्रिणस्तत्र महाहवाग्रे सुरासुराणामपि दुर्निरीक्ष्ये ॥ ९४ ॥

तदानीं मन्थानाचलमिव रिपुबलजलधिं क्षोभयन्तमतिविस्मयनीयकरलाघवं रणरङ्गे निर्निरोधशताङ्गप्रचारं निस्तुलसेनासंपदमध्य-

द्वितीयम्, निरस्तदोषमपि महादोषम्, अमितगजतुरगादिसहायमपि चापैकसहायम्, रथगतमपि धनुषि निषण्णम्, समुत्सारितविद्विडिन्धनमपि ज्वलत्प्रतापानलम्, आयतलोचनमपि सूक्ष्मदर्शनम्, नन्दाढ्यं एकमपि द्विधा त्रिधा चतुर्धा च वीक्ष्य बहवो मेदिनीपतयस्तत्क्षणमभ्यसूययेव स्वयं पञ्चत्वमाजग्मुः ।

नपुले विपुले च चापवल्लीं भृशमाकृष्य किरत्यतीव रोपान् ।
खगमण्डलमेदुरं नताग्रं पिहितोद्यत्खगमण्डलं बभूव ॥ ९५ ॥

तावत्कोङ्कणभूपतिर्द्रुततरं धावद्रथेनागतः
क्रोधान्धो नपुले ववर्ष विशिखासारं महागर्जनः ।
यद्वद्दुर्धरवज्रपातमधिकं संवर्तकालोद्यतो
जीमूतो वसुधाधरस्य शिखरे निःसीमघोरारवः ॥९६॥

दिशं प्रतीचीमिव पश्चबन्धुं मूर्छां गतं मन्दतरप्रतापम् ।
अपासरत्संगरभूमिभागविहायसो वीरमिमं नियन्ता ॥९७॥

तदिदमाकर्ण्य शोककातरं निजजामातरं कोपारुणवदनं कुरुपद्मवदनं समीक्ष्य विद्याधरक्षोणीपतिर्गरुडवेगः प्रथितनिजबलकोलाहलव्यालोललोकः स्तोकेतरपराक्रमः क्रमेण संग्रामसीमामवजगाहे ।

संग्रामोपरि जृम्भितः खगपतिः कोपात्करालाननः
शक्तीस्तोमरशूलनालपरिघान्कुन्तानसीन्पर्वतान् ।
वर्षन्भीममदाट्टहासरभसक्षुभ्यद्दिशामण्डल-
श्रीक्रीडाम्बरसीम्नि संगरकलातुङ्गीभवद्दोर्मदः ॥ ९८ ॥

दृष्ट्वेमं रुधिराणि तत्र ववमुः केचिद्भटाः शत्रुषु
प्राणान्केचन तत्यजुर्भयभरात्पेतुः क्षितौ केचन ।
केचिद्धावनलालसा वसुमतीपालाश्च दिङ्मोहतो
भ्राम्यन्तो रणसीम्नि शिक्षितहयाभ्यासप्रकर्षं दधुः ॥९९

रे रे कुत्र पलायितोऽसि समरे मा कम्पनं प्राप्नुया-
स्तिष्ठाग्रे हत कोङ्कणेश शमनस्त्वामीहते भक्षितुम् ।
शीर्षं ते विनिपात्य कर्णविगलद्रक्तप्रवाहैः परां
तृप्तिं कल्पयति क्षणात्क्षितिपतिर्भूतावलीनामिह ॥१००॥
एवं जगर्जुः खचरसैनिकाः सिंहविक्रमाः ।
सपत्नकण्ठकदलीकाण्डताण्डवितासयः ॥ १०१ ॥

तदानीं पुष्पितकिंशुककाननमिव पल्लविताशोकवनमिव पारिभद्रद्रुमविपिनमिव च परितः क्षतं निजबलमवलोक्य कृताभिषेणनं कोङ्कणमहीपतिं कर्णपूरसौरम्यसमाकृष्टभृङ्गावलिशङ्कावहशिञ्जिनीविगलद्विशिखधाराभिर्गगनतलं पूरयन्तमेनममन्दवेगो गरुडवेगः क्षणेन वक्षसि शक्त्या विव्याध ।

भेत्स्यन्ति मे मण्डलमद्य वीरा विद्याधरेन्द्रेण विदीर्णदेहाः ।
इतीव वेगेन पयोजबन्धुरस्ताचलोदग्रदरीं विवेश ॥ १०२ ॥

तदनु गरुडवेगविक्षिप्तगण्डशैलखण्डिताङ्गेन हतशेषेण सैन्येन काष्ठाङ्गारसेनाधिपे कटकं प्रविष्टे, गरुडवेगमहीपालोऽपि समरावलोकनसंमुखबर्हिर्मुखकरवृष्टकल्पकतरुप्रसूनसुरभिलभुजदण्डघटितकोदण्डः, सहर्षपरस्परसल्लापकल्लोलकोरकितकुतुकेन समरकलाविलासविजयसंस्मरणजनितनिजस्वामिश्लाघापरेण सैनिकनिकरेण प्रतिक्षणमीक्ष्यमाणः, पल्लवक्षितिवल्लभगोविन्दमहीपाललोकपालप्रभृतिभिः संभाषमाणो, ग्रहोन्मुक्तेनेव चन्द्रेण मूर्च्छोन्मुक्तेन नपुलेन पुरस्कृतं स्वकटकभुवमाससाद ।

अपरेऽहनि वाहिनीपतीनां मणिमालाम्बरकुण्डलाङ्गदाम्बरादीन् ।
रथसूततुरङ्गकङ्कटादीन्प्रतिपाद्याशु कृतप्रक्रमः प्रतस्थे ॥ १०३ ॥

एवं पारितोषिकप्रदानपरिवर्धितोत्साहेनाहमहमिकापरवशेन सर्वा-

भिसारेण बलेन स्थगितक्षितितलाभोगः, पर्वतनिकाशं विजय-गिरिनामधेयं गन्धसिन्धुरमधिरूढो, भाविचक्रपातसूत्रन्यासरेखा-शङ्कावदान्यरेखात्रयशोभितं गलमभितो लम्बमानेन चक्रपतन-संप्रतीक्षस्य स्कन्धगतस्य मृत्योः करवितीर्णेनेव पाशेन मुक्ता-हारेण भासुरवक्षःस्थलः, कोटीरमणिगणप्रतिबिम्बितमार्ताण्डमण्डल-तया 'कुरुवीरशरसमाच्छादिते गगने सोऽयं न मत्संनिधान-मागन्तुमर्हति' इति करुणाकरेण दिवाकरेण पूर्वमेव गृहीतमस्तक इव बाभास्यमानः, कुटिलितभ्रुकुटीघटितवदनः काष्ठाङ्गारः स्वयमेव संग्रामाङ्गणमाजगाम।

कुरूणां वीरोऽपि प्रचुरबलकोलाहलकला-
विलासव्याघाशापतिसदनवातायनमुखः।
क्रमात्क्रामन्गन्धद्विपमशनिवेगाभिधमयं
रणाग्रं संप्राप क्षितिविदितदोर्दण्डमहिमा ॥ १०४ ॥

जडीकृतश्रवःपुटे दिवौकसां जयानका-
रवे सुराचलोल्लसद्दरीविशत्यनेकधा।
सुपर्वकामिनीजनप्रहर्षगीतकौशलं
बभूव निष्फलं तदा प्रतिध्वनद्धहारवैः ॥ १०५ ॥

रथक्षुण्णक्षोणीतलगलितपांसून्मुखगता-
न्दिशानागाः शुण्डोद्धतजलकणैः शान्तिमनयन्।
रहः स्त्रीणां रूप्याचलकुहरतल्पेषु खचराः
वितस्त्राणामङ्घ्य्रातिबहलबलग्रान्यसनतः ॥ १०६ ॥

अदृष्टचरमाहवं सुरगणैरथोज्जृम्भितं
क्षणेन मदमेदुरं प्रचुरवीरवादोत्कटम्।
नटाचलकृपाणिकाप्रतिफलद्विवस्वत्प्रभा-

दुरीक्षमतुलं तदा जयरमातुलारोहणम् ॥ १०७ ॥

वीर्यश्रीप्रथमावतारसरणौ तस्मिन्कुरूणां पतौ

बाणान्मुञ्चति हरजनर्तितधनुर्वल्लीसमारोपितान् ।

दीर्णैसत्त्रमतच्छदाभिरभितः संभिद्यमानान्तरं

भास्वद्बिम्बमहो बभार गगनश्रेणीसगुच्छन्नताम् ॥१०८॥

इभ्यस्तिन्धुरदीर्णकुम्भयुगलीमोन्मुक्तमुक्ताफलै-

र्बाणावातिजयश्रियः प्रविगलन्मोदाश्रुबिन्दुप्रभैः ।

लेखानां कुसुमोत्करं सुरभिलं द्राग्वर्षतां हर्षतो

मत्यर्चां चतुरश्चकार समरे सोऽयं कुरूणां पतिः ॥१०९

एवं भिन्दन्बलं वीरः कृतश्रममभियाय सः ।

वीरश्रियानुधावन्त्या समालिङ्गितविग्रहः ॥ ११० ॥

एवं जयश्रीताण्डवरङ्गस्थलायमानभुजयुगलं कुरुवीरमवलोक्य काष्ठाङ्गार एवमुवाच ।

क्व वैश्यपुत्रस्त्वमतीव भीरुर्वयं क्व चापागमपारनिष्ठाः ।

अथापि ते संयाति संप्रवृत्तावनात्मवेदित्वमवेहि हेतुम् ॥ १११ ॥

तुलादण्डधृतौ वैश्य तव यत्करकौशलम् ।

विस्तारयसि तच्चापे विकाषलमहो तव ॥ ११२ ॥

साहसेन रणे तिष्ठन्मुमूर्षुरसि मुग्धधीः ।

त्वत्प्राणवायोः कः पाता मत्कृपाणाहिना विना ॥ ११३ ॥

इति काष्ठाङ्गारदर्पविलसितदुर्वचनमाकर्ण्य कुरुवीरोऽप्येवं जगाद ।

त्रपां विना मे पुरतः प्रजल्पसे

कृतम वीर्यं तव दृष्टपूर्वम् ।

त्वया समः कोऽपि न लभ्यते क्षितौ

नूनं प्रभुद्रोहविधौ समर्थः ॥ ११४ ॥

विरम विरम शत्रो विश्रुतोऽसि त्वमेक-
स्त्रिजगति परिशुद्धः पातकिप्राग्रगण्यः ।
प्रसरति मम बाणः प्राणहारी पुरस्ता-
त्त्वमपि कुरु समीके जीवरक्षाप्रयत्नम् ॥ ११५ ॥

इति वदतः कुरुवीरस्य विस्फारघोषेणाशनिगर्जनशङ्कावशादन्येन दर्शितसंघटितं* कम्पमानजीवं चापभुजगमाकृष्य विषज्वालायमानान्भल्लान्काष्ठाङ्गारः कौरवं प्रति दुर्धर्षामर्षेण ववर्ष ।

विच्छिद्य विच्छिद्य शराननेकान्रिपोः शरासाद्गलितानभीरान् ।
अलक्ष्यसंधानविकर्षमोक्षान्बाणान्सपत्ने स ववर्ष वीरः ॥ ११६ ॥

गृहीतपक्षाः पटवः पुङ्खाः कौरवचापतः ।
प्रसस्रुः संगरे शब्दा वादिनो वदनादिव ॥ ११७ ॥

विपाठवर्षेण कुरूद्वहस्य नभःस्थली द्राक्पिहिताब्जबन्धुः ।
तिरोहितारिक्षितिपालसेना बभूव धात्री युगपद्रणाग्रे ॥ ११८ ॥

विपाठपञ्जरेणासौ विद्विपत्पक्षिणां कुलम् ।
बबन्ध स्पन्दनायोग्यं मन्देतरपराक्रमः ॥ ११९ ॥

तदानीमुदारपराक्रमप्रथितभुजदण्डयोः समकालमिव गीर्वाणगणलक्ष्यमाणमार्गणग्रहणसंधानविकर्षणमोक्षयोरन्योन्यं विजयाशाविजृम्भितरन्ध्रान्वेषणयोराश्चर्यकर्मकलाविलोकनसमयसंतुष्टवृन्दारकजनकरारविन्दसंदीयमानमन्दारकुसुमतुन्दिलसन्निधप्रदेशयोः मध्यप्रसृतमृत्युनासायमानबाहुदण्डविसृतचक्रीकृतकोदण्डतया कोपकुटिलितमृत्युभ्रूयुगलशङ्कासंपादकयोः प्रवृद्धोत्साहयोर्भयानकसमरमादधानयोः कुरुवीरकाष्ठाङ्गारयोः परस्परशरघट्टनजनितविस्फुलिङ्गपरंपरामेघमालासु प्रविष्टापि न शान्तिमाससाद ।

---

पङ्क्तिः ६. *दृश्या धनुष्कोट्या सहितम् । श्लो. ११८. विपाठवर्षेण, शरवर्षेण ।

तादृक्षे समरे प्रसन्नमनसो वीरस्य सात्यंधरे-
बाणालीशरदा विभिन्नवपुषि क्षीणे क्षणेनाखिले ।
द्वेषिद्मापशिलीमुखाभ्रपटले स्वीया तदा वाहिनी
प्रोन्मीलन्मुखवारिजा प्रविलसच्छ्रीराजहंसा बभौ ॥१२०

जीवंधरस्य करपद्मगतं सपत्न-
शस्त्रालिवारणपरं घनदीप्रखेटम् ।
अर्धे विभिद्य युधि राहुनिगीर्णचन्द्र-
बिम्बार्धवत्प्रविदधत्स जगर्ज शत्रुः ॥ १२१ ॥

कोपेनाथ कुरूद्वहः प्रतिदिशं ज्वालाकलापोर्मिलं
चक्रं शत्रुगले निपात्य तरसा चिच्छेद तन्मस्तकम् ।
देवाः पुष्पमवाकिरन्नविकलं श्लाघासहस्रैः समं
लोकान्दोलनतत्परः कुरुबले कोलाहलः कोऽप्यभूत् ॥१२२॥

तदानीं संत्रासपलायमानं शात्रवबलमवलोक्य, कुरुवीरः करुणाकरः क्षणादभयघोषणां विधाय, तद्बन्धुतां दीनामाहूय, तत्कालोचितसंभाषणादिभिः परिसान्त्वयामास ।

विजया विजयाधिकेन पुत्रप्रवरेणाद्य बभूव वीरमाता ।
अधुना विधुना समानवक्त्रा मम पुत्री च चिराय वीरपत्नी ॥१२३॥

इत्युक्त्वा मातुलः सोऽयं गोविन्दधरणीपतिः ।
कुरुवीरं कुलोद्धारं कुतुकादभ्यनन्दयत् ॥ १२४ ॥

वसुंधरा क्षुद्रकृतघ्नसंगात्संमार्गकामा समवेतदोषम् ।
कुरुप्रवीरस्य विशालदोषमुपाश्रिताभूदिति चित्रमेतत् ॥ १२५ ॥

तदनु जीवंधरो मुकुलिताञ्जलिकञ्जानां समन्ततः सामन्तवसुमतीपालानामानतीरालोकनेनाङ्गीकुर्वाणः, पूर्वाचलमिव पयोजबन्धुर्गन्धसिन्धुरमधिरूढो, दूरादनुगच्छद्भिः सेनाध्यक्षैरनुक्षणं प्रतिपाल्य-

मानेक्षणावसरः, सामन्तविराजितैर्गरुडवेगगोविन्दपल्लवपतिलोकपाल-प्रभृतिभिर्महीपालैः परिवृतसविधप्रदेशः, शताङ्गसंगतैर्नन्दाढ्यप्र-मुखैः सहोदरैः पद्मास्यप्रभृतिभिः सहचरैश्च परिशोभितः, प्रस-न्ननिभमुखसुधाकरालोकैरुल्लसता बलजलधिना मेदुरपुरोभागः, सह-पौरैणमहमहमिकया सरभसापनीतातपत्रान्यपरस्परोत्पीडनकुपिततुर-ङ्गमनिवारणायाससहानेकैकशो प्रतिनामग्रहणं समीपगतैः काष्ठा-ङ्गारबन्धुभिरावेद्यमानान्प्रणामसमयप्रचलितमकुटतटघटितपद्मरागप्रभा-प्रसरणकैतवेन प्रकटीकृतानुरागान्भ्रत्रपसंलक्षितक्षोणीपतीन्यथार्हं बहुमन्यमानः, समरसमानीतसपत्नलक्ष्मीनिवासविकचपुण्डरीकाय-मानेन निजबलजलधिफेनकूटशङ्कावहेनातपत्रेण विभ्राजितः, पार्श्व-द्वयसमुद्धूयमानचामरसमीरनर्तितकर्णावतंसः, पुरतो 'जय जय' इति मधुरमुच्चैः पठता बन्दिवृन्देन पाठ्यमाननिजनिरुद्धवैभवः, क्रमेण समासाद्य तत्र ध्वजकलशतोरणवितानाद्यष्टशोभाभिरलंकृतासु रथ्यासु प्रविशमानः, सकलपुरतरुणीजनबाहुवंशगलितमुक्ताफलाय-मानैः पुष्पलाजोपहारैः संभाव्यमानो राजमन्दिरमाससाद । तत्र च,

विसृष्टनिखिलावनीपतिचयः कुरूणां पति-<br>
मितैः परिजनैर्युतः प्रविशति स्म सोऽन्तःपुरम् ।<br>
निमग्नमरिकामिनीजनमतीव शोकाम्बुधौ<br>
निरीक्ष्य करुणाकरः सपदि सान्त्वनायोद्यतः ॥ १२९ ॥

ततः कुरुवीरः शोकसन्तापदीनमन्तःपुरिकाजनं समीपमानीय तत्र कुररीमिव क्रन्दन्तीं काष्ठाङ्गारमहिषीं तत्पुत्रांश्चावलोक्य कृपा-तरङ्गितः परिसान्त्वनकलाप्रवीणः पीयूषमधुराभिर्विचित्राभिर्गिरां परं-पराभिः समाश्वासयामास ।

पङ्क्तिः 1. सामन्तविराजितैः, गन्धाढ्यैः ।

तदनु जलधौ भासां पत्यौ निमज्जति पश्चिमे,
करधृतमणिश्रेणीदीपैर्जनैः परिसेवितः ।
सचिवपरिवृतः सोऽयं कोशं विवेश शनैः शनै-
र्धनमणिगणैर्वस्त्रैरन्यैश्च वस्तुभिरुज्ज्वलैः ॥ १२७ ॥

तदनु कोशभवनादिकं निजमुद्रया मुद्रयित्वा निद्रासुखमनुबुभूषुः कुरुवीरः प्रासादमधिरुह्य मणिमञ्चोपरि हंसतूलशयने सुष्वाप । ततश्च निशायामवसन्नायां प्राबोधिकजनहृद्यपद्यालापैर्मङ्गलविचित्रवादित्रारावैश्च प्रबुद्धोऽसौ जीवंधरः कृतप्राभातिककृत्यः सकलपरिवारसहितो गोविन्दराजेन सह भगवज्जिनभवनमासाद्य तत्र पूजां विस्तारयामास ।

ततः सर्वैः साकं नृपभवनमासाद्य सहसा
विदेहक्षोणीशः सचिवगणमानीय पुरतः ।
समाविश्य श्रीमान्नवमभिषेकमयतनं
समापृच्छच्चैवं कुतुकितमनाः कञ्जनयनः ॥ १२८ ॥

किं नवरत्नप्रभापरिहसितपुरंदरसभामण्डपमभिषेकमण्डपं विनिर्मितम् । किं वा तत्र सर्ववर्णवृद्धाः संमिलिताः । कच्चित्सज्जीकृतानि सुरभिशीतलप्रसन्नतीर्थपूर्णानि कनककलशकुलानि । कच्चित्तत्र संभृतानि तदुपयुक्तोपकरणानि । किं कार्तान्तिका मङ्गलमुहूर्तकृतावधानाः । कच्चिन्नानादेशनरपालाः सज्जीकृतोपायनाः संनद्धाः । किं वा नगररथ्याः परिष्कृताः ।

इति प्रश्नं समाकर्ण्य सचिवाः सञ्चितादराः ।
सर्वं सुघटितं देवस्याज्ञयेति बभाषिरे ॥ १२९ ॥

क्षीराम्भोधिपयःप्रपूर्णकलशानाहृत्य यक्षेश्वरो
यक्षैः सानुचरैस्तदा परिवृतः सूर्यप्रतीपच्छविः ।

संप्रापत्कुरुकुञ्जरं पितृपदे राज्येऽभिषेक्तुं मुदा
तत्रत्यक्षितिपावलिः स्म भजते नैलस्यवीक्षारसम् ॥१३०॥

ततश्चाभिषेकमण्डपमध्यस्थापितरत्नपीठोपरि विराजमानं कौरवं क्षीरवाराकरवारिभिर्यक्षराजगोविन्दमहाराजप्रमुखाः सहर्षमभिषिषिचुः । तदानीमनेकप्रहतपटहमृदङ्गशङ्खझल्लरीप्रमृतिवाद्यारावस्तर्जयन्निव घनाघनमण्डलमास्फोटयन्निवाखिलजनश्रुतिमान्दोलयन्निव लोकमाह्वयन्निवाभिषेकादिदृक्षुजनमाक्रमन्निव भुवनोदरमुदपादि ।

तदनु दिव्यदुकूलविभूषणाञ्चितशरीरकुरूद्वहमूर्धनि ।
मकुटमुज्ज्वलरत्नविभासुरं करधृतं निदधे स हि यक्षराट् ॥१३१॥

आपृच्छ्य कुरुभूपालमारुह्य व्योमयानकम् ।
आदिश्य परिवारं स्वमयाद्यक्षोऽपि मन्दिरम् ॥ १३२ ॥

तदानीं निखिलनरपालकुलविलसितसल्लापं गोविन्दमहीवल्लभमग्रतो विधाय सप्रश्रयमवनतपूर्वकायेन पद्मास्येन दीयमानहस्तावलम्बः, सुरस्तम्बेरमसकाशं महान्तमौपवाह्यं गजराजमुदयधराधरमिव सरोजबन्धुरैरावणमिव गीर्वाणपतिरधिरूढः, प्रकृतिजनकुमुदषण्डचन्द्रमण्डलेन क्षीरोदधिडिण्डीरधवलेन स्थूलमुक्ताफलजालकावृतेनातपत्रेण परिष्क्रियमाणोर्ध्वभागः, पार्श्वद्वयोद्धूयमानाभ्यां राज्यलक्ष्मीकटाक्षतरङ्गाभ्यामिव पयःपारावारपरिलोलदूर्मिसंकाशकनकदण्डविलसितचामराभ्यां किंचिच्चञ्चलवसनाञ्चलः, सर्वतः सममपावृतकवाटपुटप्रकटवातायनतया कुरुपतिदर्शनकुतूहलसमुन्मीलितलोचनस्येव तत्पुरस्य हर्म्याग्रावलम्बिनीनां पौरनितम्बिनीनां कासांचिद्दर्पणपरिसमाप्तप्रसाधनव्यापाराणां वामहस्तगतमणिदर्पणानां परिलसत्कोकारिपूर्णमण्डलानामिव राकारजनीनाम्, कासांचन सरभसगमनविगलितमेखलाकलापाकुञ्चितचरणपल्लवानां

शृङ्खलाघटितचरणभारमन्दपदकरिणीनामिवापरासाम्, आर्द्रलाक्षारसारुणचरणसरोजानां कमलपरिपीतबालातपानामिव कमलिनीनामन्यासाम्, मरकतमणिखचितवातायनदत्तवदनारविन्दानां सुन्दरीमणीनां विकसितैकशतपत्रशोभितां गगनतलविलसितां कमलिनीं तुलयन्तीनाम्, करारविन्दगलितमरन्दबिन्दुशङ्कासंपादकैर्नखसुधाकरपरिगलत्तुषारशीकरसंदेहसंदायकैः सकुसुमैर्लाजाञ्जलिभिरवकीर्यमाणः, पुरःसरविविधवाद्यरवविमिश्रितेन पुरोयायिनां मङ्गलपाठकानां 'जय जय' इति मधुरवचनरचनानुयातेन, संक्षोभसमुत्पतत्पुरवलीनपुण्यषय-झंकारमेदुरेण प्रासादपुञ्जसञ्जातप्रतिध्वानेन दीर्घतरतामुपगतेन कोलाहलेन मुखरितदिगन्तरः, तां पुरीं प्रदक्षिणीकृत्य द्वारदेशमवतीर्णः, मज्ज्वलद्दीपशोभितकनकपात्रं वहन्तीनां वारवनितानां निचयेन विरचितनीराजनमङ्गलः, सत्यंधरात्मजो, विततवितानविलम्बिमुक्तादामविस्तारिते दन्दह्यमानधूपसुरभिले मणिमण्डपे प्रविश्य, कुलक्रमागतं सिंहासनमलंचकार।

मोदाम्बुराशिर्व्यलसत्प्रजानां कुरुप्रवीरेन्दुमहोदयेन।
पौराङ्गनानां नयनोत्पलेषु मरन्दधाराश्रुजलच्छलेन ॥ १३३ ॥

क्षुद्रक्षितीशेन कृतं प्रजानां संक्षोभमालक्ष्य दयालुरेषः।
राजा समा द्वादश नैककीर्तिगौरां धरित्रीमकरां चकार ॥१३४॥

पृथ्वीक्षपदे निषण्णमकरोद्गन्धोत्कटं भूपतिर्नन्दाढ्याय च यौवराज्यपदवीं प्रादात्कुरूणां पतिः।
तद्योग्यपदे चकार निखिलान्पद्मास्यमुख्यान्सखीन्न्यांश्चापि पराधिपान्करुणया स्वे स्वे पदेऽस्थापयत् ॥१३५॥

विद्याधरविशालाक्ष्या भाले चन्द्रार्धकोमले।
पट्टबन्धनमातेने सोऽयं वसुमतीपतिः ॥ १३६ ॥

राज्ञामुपायनान्येव गृहीत्वा कुरुकुञ्जरः ।
ततो द्विगुणरत्नादिसार्थं प्रादान्मुदा नृपः ॥ १३७ ॥
यथार्हं मन्त्रिवृद्धानां बहुमानं धरापतिः ।
ततान वर्णवृद्धानामपि प्रत्येकमादरात् ॥ १३८ ॥
औदार्यप्रथमावतारसरणौ जीवंधरे भूपता-
वर्थिभ्योऽभिमतप्रदानपदवीबद्धादरे जाग्रति ।
नाकानोकहदेवधेनुविलसच्चिन्तामणीनां कथा
हास्याय प्रवदन्ति सम्यविबुधाः शास्त्राब्धिपारंगताः ॥१३९॥

तदनु चतुरङ्गबलसंगतेन नन्दाढ्येन समानीतां निजजननीं विजयामहादेवीं पादयोः प्रणिपत्य, तामानन्दपयोनिधिमग्नामाधाय, तया सह समागतस्य तापससंदोहस्य वाञ्छिताधिकं द्रविणजातं प्रदाय, मुदा तेषां पुण्यैकलभ्यां मोक्षपदवीमुपदिदेश । अन्यैः समानीताः पद्मादिदेवीः समागत्य रहसि समालिङ्ग्य परिचुम्ब्य च सकलमनोरथानामवसानभूमिं हर्षातिभूमिं प्रापयामास ।

गोविन्दक्षितिपालकस्य तनुजां सल्लक्षणां लक्ष्मणां
कान्त्या काञ्चनवल्लरीसहचरीं वृत्ताब्जकोशस्तनीम् ।
राकाशीतकराननां रतिपतेश्चापायमानभ्रुवं
लग्ने सद्गुणगुम्भिते क्षितिपतिर्जग्राह पाणौ मुदा ॥१४०॥

तदानीं सरभसमितस्ततः प्रधावितस्य परिजनस्य करधृतवेत्रलतापरस्परघट्टनजनितशब्दमेदुरेण विशृङ्खलमङ्गलविद्धचनारावविजृम्भितेन सभास्तारजनकलाशीर्वादविस्तृतेन घूर्णमानान्तःपुरजनाभरणझङ्कारमनोहरेण पुरतो जननिःसारणपरकञ्चुकिजनशब्दबन्धुरेण निर्दयप्रहतदुन्दुभिप्रभृतिवाद्यध्वनिनिर्भरेणानेकसहस्रकलकण्ठहलेनोत्सवकोलाहलेन त्रिभुवनमपूर्यत ।

जयश्रिया साकममन्दकीर्तिं विन्दन्कुरूणां पतिरेष धीरः ।
राज्यश्रिया सार्धमिमां कुमारीं लब्ध्वा प्रजानां वलयं जुगोप ॥४१॥

इति महाकविहरिचन्द्रविरचिते श्रीमति चम्पुजीवंधरे
लक्ष्मणालम्भो नाम दशमो लम्भः ॥

---

## एकादशो लम्भः ।

दोष्णा कुन्दसमानकीर्तिविसरैरामोदिनीं मेदिनीं
वाचा सत्यविलासमुत्तममधुस्यन्दमतीपश्रिया ।
चित्तेन क्षितिपालनीतिपदवीं नेत्रेण सर्वप्रजा-
योगक्षेमकलां बभार नृपतिर्हस्तेन दानोदकम् ॥ १ ॥

तस्मिन्नरपतौ तत्र प्रजापालनतत्परे ।
राजन्वती च भूरासीद्रत्नगर्भा वसुंधरा ॥ २ ॥

तस्य च यशोमण्डलं शिशिरमपि शात्रवजनसंतापकारणम्, स्थिरमप्यनवरतभ्रमणशीलम्, निर्मलमपि मलिनीकृताराातिमुखकमलम्, धवलमपि प्रजानुरागपरिमेदुरम्, निन्दितराजमण्डलमप्यानन्दित-महाराजमण्डलमुदजृम्भत । तस्य च प्रतापाङ्कुरा दिक्सुन्दरीणां केशपाशेषु कल्हारशङ्काम्, कर्णदेशेषु किसलयस्तोमविभ्रमम्, स्तनकुचकुम्भेषु काश्मीरशोभाम्, कटिप्रदेशेषु कौसुम्भपटसंभावनाम्, कराम्बुजेषु कुरुविन्दमयकङ्कणविलासम्, पादतलेषु लाक्षारस-विच्छित्तिं संपादयामासुः ।

वह्निप्रतप्तद्रुतहेमवर्णैः प्रतापलेशैः कुरुकुञ्जरस्य ।
लिप्तेषु सर्वेष्वपि भूमिभृत्सु मेरुभ्रमोऽभूत्सुरसुन्दरीणाम् ॥३॥

पद्माकराश्रितस्यास्य राजहंसस्य सन्ततम् ।
बहुधावननिम्नत्वमद्भुतं च न चाद्भुतम् ॥ ४ ॥
इयं सुमधुराकारा लक्ष्मणा वरलक्षणा ।
राजहंसस्य पत्नीति परमाद्भुतमीक्ष्यते ॥ ५ ॥

अयं खलु लक्ष्माश्रितोऽपि पद्माभिख्यानिराश्रितोऽपि सुमित्रानन्दनो, विजयानन्दनोऽपि कुण्डलाश्रितकर्णो, धृतराष्ट्रोऽपि धर्ममयो, गन्धर्वदत्ताधिकहर्षोऽपि देवदत्ताधिकहर्षो, महिषीसंभवोऽपि वृषोत्पादी विरराज ।

लक्ष्मणाश्रितगात्रोऽपि निर्मलः कुरुचन्द्रमाः ।
सदा कुवलयाह्लादी पद्मानन्दीति चाद्भुतम् ॥ ६ ॥

कदाचिदसौ धरापतिर्विविधरत्नराशिभिर्महार्घैर्महनीयकान्तिकन्दलितमानन्दकरं सकलभव्यजनानामासेचनकं लेखलोचनानामकृत्रिमचैत्यालयप्रतिमं भगवज्जिनमन्दिरं शिल्पशास्त्रपारंगतैः शिल्पकैर्निर्मापयामास । तत्र च भगवतो नित्योत्सवपक्षोत्सवमासोत्सवपरंपरानिरन्तरनिष्पत्तये तत्समुचितानि प्रशस्तक्षेत्राणि प्रतिपादयितुकामे शात्रवजनविरामे निखिलगुणाभिरामे साक्षात्कामे विजयादेवी पूर्वकृतोपकारस्मरणजनितहर्षेण तत्क्षेत्राधिपत्यं तापसजनाय प्रदापयामास ।

नृपस्य जननी ततो निखिलशीलमालास्पदं-
व्यरज्यत निशालयीः कुटिलसंसृतावेकदा ।
अपश्यमिह पैतृकं पदमनन्दकांतौ सुते
पराक्रमजिताहितो किमधुनेति सा जानती ॥ ७ ॥

ततश्च सा देवी, अष्टापि स्नुषाः समीपे निधाय, हे वामालका हेमायितशोभिकायमानतनुलताः सीमातीतगुणगुम्फिता मराल-

गामिन्यः पूर्वमेव यूयमष्टमालारूपेण मम स्वप्ने दृष्टाः, इदानीं धृतनवमालारूपेण, इत्युत्तरोत्तरं भवतीनां वैभवातिशयो विजृम्भतामिति प्रतिपाद्य, मक्तमर्थमेवं प्रकटयामास ।

अपारे घोरसंसारे विरक्तिर्विस्तृता हृदि ।
दीक्षायै त्वरयत्यद्य मां राकेन्दुनिभाननाः ॥ ८ ॥

यूयं खलु कुरुवंशलतासुक्ताफलायमानान्पुत्रानुत्पाद्य सन्ततं कान्तेन सार्कं सौख्यमनुभूय वयोऽन्ते दीक्षामुपागन्तुमर्हथेति ।

श्वश्रूगिरमिमां श्रुत्वा शोकविह्वलमानसाः ।
देव्यस्तस्याः पुरस्तस्थुर्नमिताननपङ्कजाः ॥ ९ ॥

ततश्च देवी विनया कुमारं समीपमानाय्य धराधिराजम् ।
कादम्बिनी हंसमिवारभव्या वैराग्यवाचा विधुरीचकार ॥ १० ॥

तदनु वैराग्यपदवीमनुगच्छन्त्या सुनन्दया सह महादेवी महीनाथं कृच्छ्रायमाणं कृच्छ्रेणानुज्ञाप्य यथाविधि श्रमणीवर्यायाः पद्मार्यायाः सकाशेऽदीक्षिष्ट । श्रमणीनामग्रगण्या पद्मार्या विनयासुनन्दाभ्यां विश्राणितश्रमणीपदा नभसो निपतिता रत्नवृष्टिरिव प्रव्रज्या न प्रतिषेध्येति महीनाथं बोधयामास ।

इति मधुरगिरा प्रबोधितोऽसौ नरपतिरानतमातृपादपद्मः ।
विनयभरवशाद्विवेश धीरो निजसदनं परिवारसंपरीतः ॥ ११ ॥

तदनु कतिपयदिवसापगमे क्रमेण देवीनामुदराणि सरसीनां जलानीव शशिबिम्बा गर्भा विविशुः ।

गर्भच्छलेन संक्रान्तं प्रतिबिम्बं धरापतेः ।
ऊहुर्गन्धर्वदत्ताद्याः संनिभा दर्पणश्रिया ॥ १२ ॥

देवीजनस्य विकचोत्पलशोभि वक्त्रं
कोकद्वयस्य सदृशं कुचयुग्ममासीत् ।

आनीलचूचुकतलं विलसत्तमाल-

पत्राधिताग्रनवहेमघटप्रतीपम् ॥ १३ ॥

मणिकाधोकलापेन दूयमानो दिने दिने ।

महिषीणां मध्यभागः कृशिमानं जहौ तदा ॥ १४ ॥

तदनु प्राप्ते प्रसवसमये शुभदिवसे सावधानैर्नाडिपरिज्ञान-साधनस्वाधीनैर्निसर्गेणकेगृहीते लग्ने देवीततिः कादम्बिनीवेरंमदा-न्सुषांनसूत । ततः प्रहर्षविस्तारितलोचनः पृथ्वीकमनः पुत्रान्दृष्ट्वा शुभदिवसे कलितमहोत्सवस्तेषां गन्धर्वदत्ताप्रभृतिदेवीपुत्राणां सत्यंधर-सद्दर्शन - धरणि - गन्धोत्कट - विजय - दत्त - भरत - गोविन्द-नामधेयानि प्रकटीचकार ।

एवं सौख्येन वसतः पाकारिसदृशश्रियः ।

धराधिपस्य धीरस्य त्रिंशद्वर्षाण्ययासिषुः ॥ १५ ॥

ख्यातो श्रीभरताधिराजसदृशो नीतौ च रामप्रभो-

स्तुल्यः संपदि पाकशासनसमः पृथ्वीपतिः कौरवः ।

धर्मे धर्मतनूभवेन तुलितस्तुल्योऽर्जुनेनाहवे

सोऽयं भाग्यनिधिः शशास वसुधां धृत्वा चिरं बाहुना ॥ १६

कदाचिद्वसन्ते विरहिजनदुरन्ते प्रसाधितवनान्ते वनप्रियाविरुत-मुखरिताशान्ते संप्रवृत्ते, पुष्पफलादिकमुपहारीकुर्वता वनपालेन वनविहाराय विज्ञापितो वसुधापतिः, अष्टाभिः कान्ताभिः समं नगरान्निर्गत्य, पर्याप्तफलकुसुमपल्लवाच्छन्नमुपवनमासाद्य वनपालेन तत्र निर्दिश्यमानानेकैकशः पल्लवितपुष्पितफलिततरुनिकरान्निरीक्ष-माणश्चिरं विजहार ।

वल्गत्कुचं सपदि भङ्गुरमध्यभागं

सिध्यत्कपोलमलकाकुलवक्त्रबिम्बम् ।

व्यालोलकङ्कणझणत्कृति तत्र देव्यः
पुष्पग्रहं करतलैः कुतुकादकार्षुः ॥ १७ ॥

एवं चिरं विस्तारितविविधवनक्रीडाश्रान्तानां क्रीडासंमर्दविलुलितलतान्तानां व्यालोलनयनान्तानां संदोहेन सह क्वचन निषण्णस्तत्र गन्धर्वदत्ताकुचकुम्भयुगले मारमदेभमदधारायमाणां कस्तूरीधारां निपातयन्, गुणमालावक्षःस्थले सुरभिलमृगमदमेदुरमलयजरसं लिम्पन्, सुरमञ्जर्या नाभिकुहरादारभ्य काश्मीरपङ्केन लतां विलिखन्, पद्मायाः कपोलयोर्मकरिकां विस्तारयन्, क्षेमश्रियो वदने मृगमदतिलकं विरचयन्, लक्ष्मणायाः स्तनमुकुलयुगले मकरिकापत्रं विचित्रयन्, अन्यासां च यथोचितं प्रसाधनानि विदधानो जीवंधरः सहर्षमवर्तिष्ट ।

वृक्षाद्वृक्षमुदारशाखमचिरादाक्रम्य भूमीरुहा-
न्व्यालोलान्विदधानमाहितभयादुड्डीनपक्षिव्रजान् ।
कीशानां निचयं ददर्श वसुधापालो वनाभ्यन्तरे
शश्वद्बालकगृह्यमाणजठरोद्यद्वानरीभिर्वृतम् ॥ १८ ॥

तत्रान्यसंपर्कमवेक्ष्य रुष्टां स्वां वानरीं कोऽपि युवा प्लवङ्गः ।
दीनस्वभावो विविधैरुपायैः शान्तां विधातुं न चिरं शशाक ॥१९॥

तदनु रोषोत्कटमर्कटीं प्रकृतिस्थां कर्तुमक्षमतया बहुदैन्यदशामापन्नं मृतमिव भूमौ पतितं मायाविनं शाखामृगमवलोक्य भयविह्वलाङ्गी प्लवङ्गी समीपमासाद्य तदवस्थामपाचकार ।

प्लवङ्गतरुणस्ततः पनसपक्वपुष्यत्फलं
ददौ वनमृगीमुदे विततहर्षनद्धान्तरः ।
जहार वनपालकः सपदि तत्फलं पेशलं
करप्रचलयष्टितो मुदितवानरीं भर्त्सयन् ॥ २० ॥

इति सदयमशेषं वीक्षमाणो धरायाः
पतिरथ विषयेषु व्याहताशाविशेषः।
अतनुत हृदि चिन्तामेवमाजानधीरः
कृतमुकृतविपाकः काललब्ध्या समेतः ॥ २१ ॥

काष्ठाङ्गारायते कीशो राज्यमेतत्फलायते।
मद्येते वनपालोऽयं त्याज्यं राज्यमिदं मया ॥ २२ ॥

या राज्यलक्ष्मीर्नृदुःखसाध्या दुःखेन पाल्या चपला दुरन्ता।
नष्टापि दुःखानि चिराय सूते तस्यां कदा वा सुखलेशलेशः ॥ २३ ॥

कल्लोलिनीनां निकरैरिवाब्धिः कृपीडयोनिर्बहलेन्धनैर्वा।
कामं न संतृप्यति कामभोगैः कन्दर्पवश्यः पुरुषः कदाचित् ॥२४॥

राज्यं स्नेहविहीनदीपकलिकाकल्पं चलं जीवितं
शम्पापातक्षणभङ्गुरा तनुरियं लोलाभ्रतुल्यं वयः।
तस्मात्संसृतिसन्ततौ न हि सुखं तत्रापि मूढः पुमा-
न्नादत्ते स्वहितं करोति च पुनर्मोहाय कार्यं वृथा ॥२५॥

विलोभ्यमानो विषयैर्वराको भवृत्तैर्भृशम्।
नारम्भदोषाम्मनुते मोहेन बहुदुःखदान् ॥ २६ ॥

ममेयं मृगाक्षी मम तनय एषः प्रभुरधो-
ऽहमिमे मे पूर्वार्था इति विगतबुद्धिर्नरपशुः।
अणुप्रख्ये सौख्ये निहितरुचिरारम्भवशगः
प्रयाति प्राणेण क्षितिधरनिभं दुःखमधिकम् ॥२७॥

ये मोक्षलक्ष्मीमनपायरूपां विहाय विन्दन्ति नृपालक्ष्मीम्।
निदाघकाले शिशिराम्बुपूरं हित्वा भजन्ते मृगतृष्णिकां ते ॥२८॥

तस्मात्क्लेशानपास्त्याप्य मानुषं जन्म दुर्लभम्।
प्रमादः स्वहिते कर्तुं न युक्त इह धीमता ॥ २९ ॥

कान्ताभवद्भूपालस्य कर्णान्तायतलोचना ॥ ३४ ॥

यशोधर इतीरितो नरपतेः कुमारो भवा-

न्नभूव जितमन्मथः स्ववपुषा घनश्रीपुषा ।

तवाष्ट सुदृशो वधुः कमलजेन निष्पादिता

गिरिद्वयधुरा स्थिरा इव मनोहरा विश्रुताः ॥ ३५ ॥

कदाचिन्नवयौवनपरिपुष्टाभिः कान्ताभिः करिणीभिरिव करीन्द्रः सहर्षमुपवनविहाराय चलितः, पुरतः परिस्फुरन्तं पद्माकरमागत्य, तत्र कान्ताजनगतिनिरीक्षणलज्जितेष्विव मञ्जुलमञ्जीरवानुकारिविरावमुखरितारामेषु क्षणादुड्डीनेषु राजहंसेषु, निरवशेषमसञ्जातपक्षतया गगनोद्गमनायासमर्थम्, विकचवारिजे सत्रासं विलुठन्तम्, पद्मिनीमुखकमलचलाचलनासामुक्ताफलायमानम्, पद्माकरवासितव्यपद्मावदनसरोजविगलन्मन्दहासखण्डसंभाव्यमानम्, वनदेवताविकचकुसुमकन्दुकशङ्काकरम्, अतिपेशलं राजहंसशावकं केनचिदनुचरेण भवनमानाय्य, कनकशलाकाकलितपञ्जरे निवेश्य, मधुरक्षीरोदनाद्युपचारेण निरवद्यं विवर्धयामास ।

कदाचित्कान्तानां कुचकलशसीम्नि प्रियतमो

भवान्बालं हंसं नरवर निधायैवमवदत् ।

अये त्वं पद्मानां विरहमुपभोक्तुं न हि पटु-

र्यतस्तद्वल्लोजाम्बुजमुकुलयुग्मेऽत्र विहर ॥ ३६ ॥

एवं मरालपोतमरालकुन्तलाभिः कान्ताभिः सह सन्ततं क्रीडयति भवति सहर्षमास्थिते, धर्मविदामग्रणीस्ते पिता हंसार्भकबन्धनोदन्तमाकर्ण्य कुपितस्त्वामाहूय बहुधा धर्मपरिपाटीं प्रकटयामास । तदनु कर्णामृतायमानधर्मबोधनविजृम्भितनिर्वेदः पित्रा निवारितोऽपि भवान्वैराग्यसमासादितजिनदीक्षादुश्चरतपश्चरणदक्षः,

कान्ताभिरष्टाभिः साकं लोकोत्तरं तपःप्रकारमासाद्य, कृतसुकृतविकासितं सहस्रारकल्पे देवभूयं चिरमनुभूय, महीतले महिलाभिरेताभिरष्टाभिः सह महीपतिरजायत । इति ।

राजहंसशिशोः पूर्वं मातापितृवियोजनात् ।
पित्रोश्चिराय विरहं राजहंस स्वमास्थितः ॥ ३७ ॥

एवं योगीन्द्रवाणीमनुजनिजसतीस्निग्धवृन्दैः समेतः
श्रुत्वा राज्याद्विभीतः कुरुपतिरशनैः पातनाद्वा भुजङ्गः ।
आनर्च्यानम्य चैनं पुरवरमगमत्संसृतिव्यङ्ग्यसौख्यं
मन्वन्हालाहलाभं तपसि निजमतिं सुस्थिरां संदधानः ॥३८॥

तदनु वसुमतीवल्लभेन राज्यपरिपालनाय समादिष्टे युवराजे नन्दाढ्ये तपःसाम्राज्यमेव वरीतुकामे, कुरुवीरः पुनः संगतगङ्गलमुहूर्ते भगवत्पूजापुरःसरं विस्तारितमहोत्सवः प्रथितपराक्रमलक्ष्मीविहारप्रसादायमानभुजं गन्धर्वदत्तानन्दनं सकलकलाविलासनिधिचापविद्यापारीणगुणं कीर्तिप्रतापविभवेन रूपसंपदा चात्मानमनुकुर्वन्तं सत्यंधराह्वयं राज्यभारेऽभिषिच्य तमेवमवादीत् ।

असत्या वाणी ते तनय रसनाग्रे न वसता-
च्छ्रुवःप्रान्ते वक्रं पिशुनवचनं नेत्रसरणौ ।
परस्त्रीणां रूपं मनसि च कुमार्गे व्यवसिति-
र्मुखे कोपावेशः सकलशशिबिम्बाभवदन ॥ ३९ ॥

मनसि भगवतो जिनस्य पादौ श्रवसि धर्ममयामृतं विधेहि ।
प्रकृतिभयहितं च नेत्रवृत्तिं तनय सुखेन महीं प्रपालयेति ॥ ४० ॥

एवं प्रकारेण निजनन्दनं सत्यंधरं बोधयित्वा, इतरानपि तनयान्यथायोग्यं पदेषु प्रतिष्ठाप्य, श्रीवीरजिनचरणसरोजभक्तिभरेण वैराग्यवशेन च प्रेरितो महीपालः, सकलसहचरनिकरपरिवृतपार्श्वभागः,

तुष्टाभिरष्टाभिः कान्ताभिर्दन्तुरितसविधप्रदेशः, पश्चादनुधाविन्या सत्यंधरप्रमुखनन्दनपुरस्सरया वेलामतिक्रम्योद्गच्छन्त्येव वारिनिधिवारिवाहिन्या निर्दयसंताडितपटहप्रभृतितूर्यघोषविशेषप्रतिध्वानितकुल्यानलकन्दरया मन्धरया पृतनयानुगम्यमानः, क्रमेण सप्रणामं तया विसृष्टः, श्रीसभासमीपमासाद्य तां त्रिः प्रदक्षिणीकृत्य प्रमुदितमना मनागितरविस्मयविस्तारिताक्षः प्राविशत्।

यस्याः पार्श्वे रत्नरेणुप्रनल्पो धूलीजालः शक्रचापानुकारी।
अर्हन्नाथं मुक्तिलक्ष्म्या वरीतुं क्षिप्तं रेजे कङ्कणं वा समीपे ॥४१॥

यस्यां च गगनतलचुम्बिनः स्पन्दमानमन्दपवमानकन्दलवल्गमानध्वजा मानस्तम्भाः क्रोधादीनां चतुर्णां निरसनाय प्रसृतसंसृल्लक्ष्मीतर्जनीकार्यधूर्वहा व्यराजन्त।

सालकान्तं सुखाभोगं दधत्यास्तत्सभाश्रियः।
लीलादर्पणतां प्रापुः सरस्यो यत्र निर्मलाः ॥४२॥

यत्र च विकचपुण्डरीकपण्डमण्डिता स्फटिकस्वच्छसलिला सतारकेव व्योमलक्ष्मीः, महामहिमविराजितं विभुं विलोकितुमागतेव खर्लोककल्लोलिनी सुराङ्गनानेत्रविलासविजिताभिरिव ह्रियान्तर्हिताभिः शफरीभिर्विराजिता खातिका विभाति स्म।

---

पङ्क्तः ७—१२.

"नेदीयस्याः प्रेयसा विप्रलम्भ्यास्तस्याः तेन वेणी विमोच्य।
धूलीजालच्छद्मना पार्श्वतोऽस्याः क्षिप्त मुद्राकङ्कणं मुक्तिलक्ष्म्याः॥ २०। ७०॥
तैं प्रत्याशं वायुवेल्लद्ध्वजाग्रा मानस्तम्भास्तत्र चत्वार आसन्।
क्रोधादीनां ये चतुर्णां निरासे संसल्लक्ष्म्यास्तर्जनीकार्यमीयुः॥ २०। ७१॥
आस्य तस्याः सालकान्तं दधत्याः शोभामङ्गे संपदं स्वा दिदृक्षोः।
तच्चत्वारि स्फाटिकस्वच्छनीराण्यापुर्लीलादर्पणत्वं सरांसि ॥" २०। ७२॥

इति धर्मशर्माभ्युदये.

प्रसूनानां वाटी सुरभिलतमा यत्र वितता
ततः सालो लोलन्मणिगणपरीतः समलसत् ।
चतुर्द्वारप्रान्तान्तरविलसिते नाट्यसदने
ततो मार्गे धूपाश्रितकनककुम्भौ व्यलसताम् ॥ ४३ ॥

या खलु तत्र संमिलितभव्यसंदोहतो भगवद्दर्शनेन निर्गच्छत्पापपरंपराभिरिव धूपघटनिर्यद्धूमरेखाभिः परीताभ्रभागा, ककुप्कामिनीजनकर्णपूरायमाणपल्लवतल्लजविराजितानामिन्द्रोद्यानमध्यमुदस्तहस्तानामिवाभ्रंकषशाखानां चैत्यवृक्षाणां चतुष्टयेन विभ्राजितैर्विविधविचित्रधारायन्त्रलतामण्डपकाननक्रीडाशैलपेशलैश्चतुर्भिरुपवनैरुपेता, नानाविधमणिगणखचिततोरणया सुवर्णवेदिकयालंकृता, शिखावलदन्तावलदन्तिवैरिप्रमुखलाञ्छनलाञ्छिताभिर्गगनतलोल्लेखनसमाकृष्टसुरतरङ्गिणीतरङ्गसंभावनासंपादकव्याप्तमुक्ताकलहंसनिचयरुचिराभिर्वैजयन्तीभिर्विलसिता, भगवन्मुखसरसिजनिगलद्दिव्यध्वनिश्रवणकुतुकेन कुण्डलीभूयोपतस्थुषा मेरुणेव कनकमयसालेन विलसिता, सकलचित्तहारिणा पुष्पितकल्पकवनेन परिशोभिना, निखिलजगदानन्दकन्दलसंदायिन्या चतुर्गोपुरचारुतमरत्नवेदिकया संघटिता, जिनपतिदर्शनकुतूहलेन प्रादुर्भूताभ्रवपदार्थैरिव नवनव-

स्तूपानर्चासनाथान्धारयन्ती, भगवद्दिदृक्षया समागतेन मूर्तेन वायुमार्गेणेव स्फाटिकमाकारेण परिवृता, सन्ततपरिस्फुरन्निशाकान्तकान्तिविनिर्मितैर्भव्यसंदोहाध्यासितैर्द्वादशकोष्ठैः प्रतिष्ठिता विरराज ।

तत्र प्रविश्य स च गन्धकुटीसमाख्ये
स्थाने मणिस्फुरितसिंहतटासनाग्रे ।
पूर्वाचले रविमिव प्रविराजमानं
वीरं ददर्श कुतुकेन जिनाधिराजम् ॥ ४४ ॥

प्रदक्षिणीकृत्य धराधिराजो भक्त्या जगत्पूज्यमथैष वीरम् ।
इयाज पूजाविधिना विधिज्ञस्तुष्टाव चैवं परितुष्टचित्तः ॥ ४५ ॥

स्वामिन्नम्बुदमार्गचुम्बिविटपैरुद्धाम्बराशान्तरो
गायन्भृङ्गरवैस्तवामलगुणान्नृत्यंश्चलैः पल्लवैः ।
रक्तस्तावकदर्शनेन विविधैः पुष्पप्रवालोत्करै-
र्मुर्तो वा मधुरेव वीर भवतो राजत्यशोकद्रुमः ॥ ४६ ॥

वृष्टिः पौष्पी वरजिनपते तावकी सातिशुभ्रा
संद्रष्टुं त्वां गगनसरणेरागता चन्द्रिका किम् ।
यद्वा भीत्या कुसुमधनुषो हस्तपद्माच्च्युता द्रा-
ग्बाणश्रेणी नियतमखिलस्पष्टविज्ञानवार्धे ॥ ४७ ॥

क्वेयं लक्ष्मीरपारा क्व खलु जिनपते निश्चलं निःस्पृहत्वं
क्वासौ सुस्पष्टबोधः सकलविषयकः क्वेदृशानुद्धतत्वम् ।

---

श्लो. ४६—४८.

"गायन्निवेनेव भृङ्गाङ्गनानां नृत्यन्निवैः पल्लवानामिवैः ।
किं मूर्तोऽन्यस्तस्य धृत्त गुणौघैर्जेते रक्तो यस्य वृक्षोऽप्यशोकः ॥ २० । ५३ ॥
वृष्टिः पौष्पी सा कुतोऽभूभ्रमस्तः संभाव्यन्ते नात्र पुष्पाणि यस्मात् ।
यद्वा ज्ञातं ग्राणक्कस्य हस्तादर्हद्भीत्या तत्र बाणा निपेतुः ॥ २० । ५४ ॥
क्वेय लक्ष्मीः क्वेदृक् निःस्पृहत्वं क्वेदं ज्ञानं क्वास्त्यनौद्धत्यमीदृक् ।

रे रे सर्वे कुतीर्था वदत जिनाधिपेत्येवमामन्त्रनादो
मोः स्वामिन्दुन्दुभिस्ते वदति जलधरध्वानपूरानुकारी ॥ ४८ ॥

सकलजगदीश्वर विश्ववेदनचतुर सुरधराधरधीर श्रीवीर, भवदी-यातीतानागतवर्तमानविज्ञानमसमानं भुवनत्रयैश्वर्यमहिमानं प्रकटी-कुर्वाणम्, अमर्त्यैः स्वप्राभवप्रकाशनाय चक्रीकृत्य गगने त्रिधा विन्यस्तमिव क्षीरवाराशिसलिलम्, अत्यच्छस्वभावमपि भव्यौघा-नुरागमादधानं छत्रत्रयं विराजते ।

भामण्डले जिनपते तव दर्शनार्थं
समागतिग्मरुचिमण्डलशङ्क्यमाने ।
स्वातीतजन्मसरणिं मणिदर्पणाभे
संपश्यति प्रविशदं खलु भव्यसङ्घः ॥ ४९ ॥

स्वामिञ्जिनेन्दो त्वयि जृम्भमाणे व्यर्थीकृतानामुडुराजभासाम् ।
द्रागेधसा दण्डनियन्त्रितानां राजीव ते राजति चामरालिः ॥ ५० ॥

कुरङ्गैरुद्गतग्रीवैः श्रूयमाणा निरन्तरम् ।
जितपीयूषधारा ते दिव्यभाषा विराजते ॥ ५१ ॥

सन्ततविनमदमरनिकरमकुटतटघटितमुक्तारुचिपुनरुक्तनखचन्द्रिका-नन्दितनिखिलजननयननीलोत्पल श्रीवीर, तव पञ्चाननासनम्, उपवन-मिव नानापत्रलतान्वितं व्याजृम्भमाणनन्दनैः पञ्चवदनैराश्रितं च,

रे रे ब्रूत द्राक्कुतीर्था इतीव ज्ञाने भर्तुर्दुन्दुभिर्व्योम्न्यवादीत् ॥" २० । ५५ ॥

श्लो. ५०—५१.

"रेजे मुक्तिश्रीकटाक्षच्छटा वा पार्श्वे पङ्क्तिश्चामराणां जिनस्य ।
ज्ञानालोकैर्निष्कलानामिवेन्दोर्भासामुच्चैर्दण्डनियन्त्रितानाम् ॥ २० । ५७ ॥
अप्युद्ग्रीवैः श्रूयमाणा कुरङ्गैः कर्णाभ्यर्णस्फारपीयूषधारा ।
आ गव्यूतिद्वन्द्वमभ्युद्भ्रमन्ती दिव्या भाषा कस्य नासीत्सुखाय ॥" २० । ५८ ॥

इति धर्मशर्माभ्युदये.

वाराकरनीरमिव सरत्नमकरम्, हेमाचलशृङ्गमिवात्युन्नतम्, सकलजगदानन्दं कन्दलयति ।

एवंभूतैरष्टभिः प्रातिहार्यैर्जुष्टः श्रीमन्तं भवाब्धौ निमग्नम् ।
वीर स्वामिन्नुद्धरेति क्षितीशो भक्त्याभिक्याद्देवदेवं ननाम ॥ ९२ ॥

अनुज्ञां लब्ध्वासावथ जिनपतेर्मातुलमुखैः
समेतो भूपालो गणधरमिहानम्य कुशलः ।
गृहीत्वा निःसङ्गं जिनपगदितं संयमवरं
तपस्तेपे जीवंधरमुनिवरस्तस्य सविधे ॥ ९३ ॥

कुरूपशोभितोऽप्येष सुरूप इति विश्रुतः ।
मदनोऽपि बभूवाद्य शिवसौख्यकृतादरः ॥ ९४ ॥

आस्तां तावदिदमन्यदद्भुततममालक्ष्यते ।

संगीतिव्यपदिष्टो यः सुहृद्भिरभिनन्दितः ।
सोऽयं सुहृज्जनेष्वासीदसंगीति प्रथां गतः ॥ ९५ ॥

देव्यो गन्धर्वदत्ताद्याः सहिताः स्वस्वमातृभिः ।
समीपे चन्दनार्यायाः संयमं जगृहुः परम् ॥ ९६ ॥

जीवंधरोऽयं तपसि प्रवीणो यथाक्रमं नष्टघनाष्टकर्मा ।
रत्नत्रयं पूर्णमवाप धीरो महामुनिर्मान्यगुणाभिरामः ॥ ९७ ॥

अष्टाभिः स्वगुणैरयं कुरुपतिः पुष्टोऽथ जीवंधरः
सिद्धः श्रीहरिचन्द्रवाङ्मयमधुस्यन्दिप्रसूनोच्चयैः ।
भक्त्याराधितपादपद्मयुगलो लोकातिशायिप्रभां
निस्तुल्यां निरपायसौख्यरुहिरीं संप्राप मुक्तिश्रियम् ॥९८॥

प्रजानां क्षेमाय प्रभवतु महीशः प्रतिदिनं
सुवृष्टिः संभूयाज्जनतु शमनं व्याधिनिचयः ।

---

पं. ५९. सर्वा, सर्वानन्दजननाः । आपूर्णा, समाहिताः.

The same legend has been treated in two other works—the *Jîvandharachampu* of Harichandra and the Tamil poem *Jîvakachintamani*.

The *Gadyachintamani* is divided into eleven *lambas*. The first *lamba* relates that king Satyamdhara of Rajapuri in Hemangada lost his life and kingdom through the treachery of his minister Kâshthângara. Following the example of the *Kâdambarî*, the author devotes 2¾ pages to the description of Hemangada 4 pages to that of Satyamdhara, and 2½ pages to that of his queen Vijaya. The pregnant queen escaped on a sort of flying-machine which had the shape of a peacock, and gave birth in a cemetery to prince Jivaka or Jîvamdhara, who was adopted by a merchant named Gandhotkata and, as the second *lamba* narrates, educated by Aryanandyâchârya. In the meantime the usurper Kâshthangara despatched an army against robbers who had carried away cattle. As this army was repulsed, Nandagopa, the owner of the cattle, proclaimed publicly that he would give his daughter Govinda in marriage to the recoverer of the cattle. Prince Jîvaka accomplished this feat and received, as promised, Nandagopa's daughter, whom he made over to his companion Padmamukha. In the third *lamba* we are told that a merchant of Rajapuri, named Sridatta was shipwrecked on an island and thence carried away on a flying camel by a man who turned out to be Dhara, the minister of the Vidyadhara king Garudavega of Nityaloka. This king possessed a daughter Gandharvadatta, at whose birth it had been foretold that she would become the wife of a prince at Râjapuri. Thither the king sent his daughter on a *vimâna* along with Sridatta, who gave her out for his own daughter and had it proclaimed that she would be given in marriage to any one who surpassed her in playing the *vînâ*. As will be expected, prince Jîvamdhara succeeded in this competition, and the fair Gandharvadattâ chose him for her husband from the midst of all royal suitors. Here ends the third *lamba*.

The above hasty notes will, I hope, induce others to peruse the interesting Sanskrit work which has been made accessible through the disinterested labours of Mr. Kuppuswami Sastri and his collaborator. It may be added that the text of *Gadyachintamani* is based on six MSS, and is edited and printed in a most scholarly manner. The rules of division of words and of interpunctuation are as carefully observed as in the standard European editions of Sanskrit books— a point which adds greatly to the usefulness of the new work and recommends it for adoption as a text-book for University examinations. Mr. Kuppuswami Sastri is now editing another unpublished prose work *Viranarayanacharita* of Vámanabhattabána.

*Camp, 2nd February, 1903.*

(Sd) E. HULTZSCH.

---

THE INDIAN REVIEW, MADRAS:—GADYACHINTAMANI of Vadhibhasimha in Devanagari, Edited by T. S. Kuppuswami Sastri and S. Subrahmanya Sastri of Tanjore (G. A. Natesan and Co., Madras).

This is a rare work in Sanskrit prose which now appears for the first time in print. Its author is one Vadhibhasimha, who belonged to the Jaina sect. His original name was Odayadeva, a word commonly met with in the nomenclature of Southern India. His erudition and literary fame brougut him the appellation of " the vanquisher of opponents, as a lion of elephants." The Editors, in a well-written preface, fix his date to be subsequent to 660 A. D.

The story itself is very simple. It tells us of a king Satyamdhara who transferred the burden of his state to his scheming minister, and lived with his queen in retirement without bestowing a thought on his subjects. The minister usurps the kingdom, the king dies, and the queen, after giving birth to a son named Jivamdhara, follows her husband to heaven. The boy is bred up by a merchant and educated, and is also informed as to the details of his birth and position. His wrath

The same legend has been treated in two other works—the *Jîvandharachampu* of Harichandra and the Tamil poem *Jîvaka-chintamani.*

The *Gadyachintamani* is divided into eleven *lambas*. The first *lamba* relates that king Satyamdhara of Rajapuri in Hemangada lost his life and kingdom through the treachery of his minister Kâshthângâra. Following the example of the *Kâdambarî*, the author devotes 2¾ pages to the description of Hemangada 4 pages to that of Satyamdhara, and 2½ pages to that of his queen Vijaya. The pregnant queen escaped on a sort of flying-machine which had the shape of a peacock, and gave birth in a cemetery to prince Jîvaka or Jîvamdhara, who was adopted by a merchant named Gandhotkata and, as the second *lamba* narrates, educated by Aryanandyâchârya. In the meantime the usurper Kâshthangara despatched an army against robbers who had carried away cattle. As this army was repulsed, Nandagopa, the owner of the cattle, proclaimed publicly that he would give his daughter Govinda in marriage to the recoverer of the cattle. Prince Jîvaka accomplished this feat and received, as promised, Nandagopa's daughter, whom he made over to his companion Padmamukha. In the third *lamba* we are told that a merchant of Rajapuri, named Srîdatta was shipwrecked on an island and thence carried away on a flying camel by a man who turned out to be Dhara, the minister of the Vidyadhara king Garudavega of Nityaloka. This king possessed a daughter Gandharvadatta, at whose birth it had been foretold that she would become the wife of a prince at Râjapuri. Thither the king sent his daughter on a *vimâna* along with Srîdatta, who gave her out for his own daughter and had it proclaimed that she would be given in marriage to any one who surpassed her in playing the *vînâ*. As will be expected, prince Jîvamdhara succeeded in this competition, and the fair Gandharvadatta chose him for her husband from the midst of all royal suitors. Here ends the third *lamba*.

The above hasty notes will, I hope, induce others to peruse the interesting Sanskrit work which has been made accessible through the disinterested labours of Mr. Kuppuswami Sastri and his collaborator. It may be added that the text of *Gadyachintamani* is based on six MSS, and is edited and printed in a most scholarly manner. The rules of division of words and of interpunctuation are as carefully observed as in the standard European editions of Sanskrit books— a point which adds greatly to the usefulness of the new work and recommends it for adoption as a text-book for University examinations. Mr. Kuppuswami Sastri is now editing another unpublished prose work *Viranarayanacharita* of Vâmanabhattabâna.

*Camp, 2nd February, 1903.*

(Sd.) E. HULTZSCH.

THE INDIAN REVIEW, MADRAS:—GADYACHINTAMANI of Vadhibhasimha in Devanagari, Edited by T. S. Kuppuswami Sastri and S. Subrahmanya Sastri of Tanjore (G. A. Natesan and Co., Madras).

This is a rare work in Sanskrit prose which now appears for the first time in print. Its author is one Vadhibhasimha, who belonged to the Jaina sect. His original name was Odayadeva, a word commonly met with in the nomenclature of Southern India. His erudition and literary fame brougut him the appellation of "the vanquisher of opponents, as a lion of elephants." The Editors, in a well-written preface, fix his date to be subsequent to 650 A. D.

The story itself is very simple. It tells us of a king Satyamdhara who transferred the burden of his state to his scheming minister, and lived with his queen in retirement without bestowing a thought on his subjects. The minister usurps the kingdom, the king dies, and the queen, after giving birth to a son named Jivamdhara, follows her husband to heaven. The boy is bred up by a merchant and educated, and is also informed as to the details of his birth and position. His wrath

I have read with special interest your notes on the authors of the age and their works. My only regret is that, while exceedingly valuable, they are so brief. I hope you will write a separate essay on these Sanskrit writers. In the Antiquary, there is a mention of a forthcoming paper of yours on Ramabhadra Dikshitar and the poets of his time. I suppose that essay will give me what I want.

I am very much delighted to learn that your Sanskrit scholarship and powers of research are leaving such ripe and valuable fruits. Your truly admirable patriotism is shown in your use of the vernacular as the medium for conveying your learning and wisdom to the public. * *

M. R. Ry V. VENKAYYA AVERGAL, M. A., Offg. Epigraphist to the Madras Government.—Many thanks for your very interesting booklet on the Nâyakas of Tanjore.

M. R. Ry. S. RADHAKRISHNA AIYAR AVERGAL B. A., PRINCIPAL MAHARAJA'S COLLEGE, PUDUKOTAH.—I thank you for your kindness in sending me a copy of "A Short History of the Tanjore Nayak Princes," which I have read with much interest. It is well written and shows historic research. I hope that your book will have an encouraging sale and that you will publish other works showing similar research.

THE SOUTH INDIAN MAIL, MADURA.—The public are indebted to Mr. Kuppuswami Sastrial Assistant Master, Government Upper Secondary Training School, Tanjore, for a vivid and interesting treatise on the Nayak Kings of Tanjore. The Inscriptions to be found in some of the temples and other public places and the works of various Sanskrit authors who were occupying responsible position in the Raj, during the reign of the Nayak Kings, supply Mr. Kuppuswami Sastrial with a lot of information which he has presented for the delectation of the public in a very readable form in Tamil.

செங்கல்பேட்டைக் காலேஜ் தமிழ்ப்பண்டிதர் ஸ்ரீ வே, ராஜ கோபாலய்யர்:- சக்கரவர்த்தியுடையதுப்பில தஞ்சாவூர் நாயகராஜ்ஜியத்

சரித்திரச் சுருக்கம் வரப்பெற்று முற்றும் படித்துப்பார்த்து அதிலுள்ள சிறந்த விஷயங்களையறிந்து மிக்க மகிழ்ச்சியடைந்தேன்.

இதுபோன்ற சிறந்த காரியங்களை தங்களைக்கொண்டு எப்பொழுதும் செய்வித்தருளும்படி யீசுவரனைப் பிரார்த்தித்துக்கொண்டிருக்கிறேன்.

மகா-ா-ஸ்ரீ கே. சுந்தரராமய்யரவர்களும் மிஸ்டர் நெல்ஸனவர்களும் இப்புத்தகம் வரப்பெற்று மிகுந்த சந்தோஷமடைந்ததாகச்சொன்னார்கள். இதுபோலவே இனி தாங்களெழுதும் புத்தகங்களையுமனுப்பும்படி மிகவும் பிரார்த்திக்கிறேன்.

மதுரைச் செந்தமிழ் :— சிலகாலமாக மேற்றேயக் கல்வியின் பெரும்பயனாக, நந்நாட்டறிஞர் சிலர், முற்காலவரசர் முதலியோர் சரிதங்களைப் பலகருவிகள்கொண்டு ஆராய்ந்து வெளியிட்டு வருதல் பலரும் அறிந்ததே. இப்பொழுது தஞ்சாவூர்க் குப்புஸாமிசாஸ்திரிகளை என்பார், தஞ்சாவூரையாண்ட நாயகவரசரது சரிதங்களை எழுதிவெளியிட்டுள்ளார்கள் என்றறிந்து மகிழ்வுறுகின்றோம். இந்நூலில் தஞ்சாவூர் நாயகவரசரில் முதல்வரான சேவப்பநாயகர், அச்சுதப்பநாயகர், இரகுநாதநாயகர், விஜயராகவநாயகர் என்னும் அரசர்களைப்பற்றியும், அவர் காலத்து நிகழ்ந்த அருஞ்செயல்கள், தர்மங்கள். அவ்வரசரால் அபிமானிக்கப்பெற்ற வித்வான்கள், அவர்கள் இயற்றிய நூல்கள் முதலியவற்றைக்குறித்தும் பல சாதனங்களைக்கொண்டு நன்கெழுதப்பட்டுள்ளன. அந்நூலினிறுதியில், யக்ஞநாராயணதீக்ஷிதர் முதலியோரால் இயற்றப்பட்ட நூல்களில் அவ்வரசர் சரிதங்களை விளக்கும் சுலோகங்கள் நாகரலிபியிற்றெடுத்துக் காட்டப்பட்டுள்ளன. விலை அணா 2—6.

---

## IN PREPARATION.

CRITICAL AND EXPLANATORY NOTES

ON

## Gadyachintamani.

---